श्रीरामानन्दवेदान्तग्रन्थमालायाः द्वितीयं पुष्पम्

श्रीमद्भगवद्रामानन्दाचार्यप्रणीतानन्दभाष्योपेता

# बृहदारण्यकोपनिषत्



त्रिभुवनदासः

संशोधकः—

वेदान्ती स्वामी श्रीरामपदार्थदासजीमहाराजः

न्यायवेदान्तमीमांसाचार्यः अध्यक्षो भारतसाधुसमाजस्य

श्रीरामवल्लभाकुंज–श्रीजानकीघाटः

:श्री अयोध्या:


प्रकाशिका :—

श्रीरामानन्दवेदान्तप्रचारकसमितिः

अहमदाबादः

संवत् २०२५ श्रीरामानन्दाब्दाः ६६८ आश्विनः विजयादशमी

प्रकाशिका:—

श्रीरामानन्दवेदान्त-प्रचारक-समितिः

अहमदाबादः (गुजरातराज्यं)

प्रथमावृत्तिः-१००० प्रतिः

मूल्य ६) २५/००

प्राप्तिस्थानम्

१-श्रीरामानन्दवेदान्त-प्रचारक-समितिः

कार्यालयः, अहमदाबादः

२-श्रीमोतीलाल-बनारसीदास.

पोस्ट बाक्स नं० १५

नेपाली खपरा, बनारस (उत्तरप्रदेशः)

श्रीरामो विजयतेतराम् ।

# भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# बृहदारण्यकोपनिषत्

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।
ॐ शान्तिः शान्तिः शान्तिः ॥

दूर्वादलश्यामलनिर्मलाङ्गं पिशङ्गवासःपिहिताधराङ्गम् ।
अनङ्गकोटिच्छविपूरिताङ्गं नमामि रामं जनकाङ्गजाङ्गम् ॥ १ ॥
आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम् ।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये ॥ २ ॥
सूत्रवृत्तिकृतौ नत्वा व्यासबोधायनौ मुनी ।
श्रीमन्तं राघवानन्दाचार्यं गुरुं नमाम्यहम् ॥ ३ ॥
कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम् ।
बृहदारण्यकस्यात्र भाष्यमानन्दसंज्ञकम् ॥ ४ ॥

अथेयं बृहदारण्यकोपनिषत् अष्टाध्यायलक्षणा । तत्र प्रथम-द्वितीयाध्यायौ प्रवर्ग्यादिकर्मप्रतिपादकावितावुपेक्ष्य शेषाध्यायलक्षणाया व्याख्यानं प्रस्तूयते । न च "उषा वा अश्वस्ये" त्यादि प्रकरणमपि अश्वमेधादिकर्मविषयकमेवेति तद्व्याख्यानमप्यनुचितमिति वाच्यम् । उषा वेत्यादिमन्त्राणां परमात्मदृष्टिविधिरूपतया परमात्मकत्वप्रतिपादकतया च परमात्मसम्बन्धित्वात् तद्व्याख्यानस्योचितत्वात् । अत-एवाश्वमेधब्राह्मणादेः परमात्मपरकोपनिषद्भागसंगतिरपि भवति । अरण्ये उच्यमानत्वात् परिमाणतो बृहत्त्वाच्च बृहदारण्यकमिति संज्ञा भवति ।

**ॐ उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्मा अश्वस्य मेध्यस्य ।**

( उषा वेत्यादि ) उषा- उषः कालो ब्राह्मो मुहूर्तः वै इति प्रसिद्धार्थकः मेध्यस्य तत्र मेधो यज्ञस्तमर्हतीति मेध्यः तस्य मेध्यस्य यज्ञाङ्गस्य । अथवा मेध्यस्य पवित्रस्याश्वस्य यज्ञसाधनस्य शिरः यथा वै यज्ञिनि शरीरे इतराङ्गापेक्षया शिरसः प्राधान्यम् तथैवास्मिन् यज्ञे अश्वः प्रधानम्-इत्यश्वशिरसि उषा दृष्टिः कर्तव्या । उषः कालस्य दिनमुखत्वेनाहःशिरस्त्वात् यज्ञसाधनाश्वस्य शिरसि तद्बुद्धिर्भवत्येवेति । एवं चाश्वमेधेष्यधिकृतः पुरुषोऽश्वे सति कर्मणो वीर्यवत्वार्थं कालादिदृष्टिमश्वावयवेषु कुर्यात् अश्वमेधानधिकारी तु तादृशाश्वाभावे आत्मानमेवाश्वं कल्पयित्वा शिरः प्रभृत्यवयवेषु कालादिदृष्टिकरणेनात्मनः प्रजापतित्वं सम्पाद्य प्रजापतिरहमस्मीत्याकारकज्ञानेन प्रजापतिभावमाप्नोति, प्रजापतेः कालात्मकत्वादिति ।

( सूर्यश्चक्षुरिति ) मेध्यस्याश्वस्य सूर्य एव चक्षुर्नेत्रम्, चक्षुषि सूर्यदृष्टिः कर्तव्या सूर्यस्य चक्षुरधिष्ठातृत्वात्, तद्बुद्धिस्तत्रकरणीयेत्यर्थः । वातः प्राणः मेध्याश्वस्य प्राण एव वातो वायुर्वायुस्वाभाव्यात् वातप्राणयोरिति ।

( व्यात्तमग्निर्वैश्वानर इति ) अश्वस्य व्यात्तं विवृतं विस्तरितं मुखमेव वैश्वानरोऽग्निः अत्र वैश्वानरेति अग्नेर्विशेषणं क्रव्याद्यग्निनिवृत्त्यर्थम् " अग्निर्वाग्भूत्वा मुखं प्राविशद्"ति श्रुत्यन्तरात् । अग्नेर्मुखाधिष्ठातृत्वादश्वमुखेऽग्निदृष्टिः करणीयेत्यर्थः ।

( संवत्सर आत्मा अश्वस्य मेध्येस्येति ) मेध्यस्यातिशयेन पवित्रस्याश्वस्यात्मा शरीरं स्वरूपम् । ऋतवोऽङ्गानीत्यादिप्रकरणेन संवत्सरावयवऋतुमासादीनामवयवतदवयवत्वेन निरूपणस्य करिष्यमाणत्वेन संवत्सरस्यावयवि शरीररूपत्वम्, तथा चाश्वशरीरे संवत्सरदृष्टिः

**द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यम् । दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्द्धमासाश्च**

कर्तव्येति । अश्वस्य मेध्यस्य सर्वत्रानुषङ्गो भवतु तदर्थं पुनर्वचनम् । यद्वा संवत्सरशब्देन सम्वत्सराभिमानी प्रजापतिर्विवक्षितो भवतीति अन्तरिक्षमुदरमिति,

( द्यौः पृष्ठमिति ) मेध्यस्यास्याश्वस्य पृष्ठं द्यौर्द्युलोकऊर्ध्वत्वसामान्यात् । यथा द्युलोकोऽतीवोच्छ्रितस्तथैव शरीरे तस्य पृष्ठमप्यत्युच्छ्रितमिति ऊर्ध्वत्वस्योभयत्र समानत्वादश्वपृष्ठे द्युलोकदृष्टिः कर्त्तव्येति ।

( अन्तरिक्षमुदरमिति ) मेध्यस्याश्वस्यान्तरिक्षमाकाश उदारम् । उभयत्र सुषिरत्वस्य समानत्वात् यथा नभश्छिद्रात्मकं तथैवाश्वस्योदरमपि अवकाशात्मकमिति भवति उदरे अन्तरिक्षदृष्टिः सप्रयोजनेति ।

( पृथिवी पाजस्यमिति ) अश्वस्य पृथिवी पाजस्यम् । पादा अस्यन्ते स्थाप्यन्तेऽस्मिन्निति पाजस्यं पादासनस्थानम् पृथिवी भुजान्तरमित्यर्थः "इयमुदर इत्यग्नौ पृथिवीदृष्टिदर्शनादिति' ।

( दिशः पार्श्वे इति ) तत्र दिशः पूर्वादयश्च तस्यापि पार्श्वे न च दिशि बहुत्वं पार्श्वे तु द्वित्वमेवेति संख्यावैषम्यात् तत्र तद्दृष्टिरशोभनेति वाच्यम् । अश्वस्य चलत्वेन सर्वमुखत्वसम्भवेन यदा पूर्वमुखोऽश्वो भवति तदा दक्षिणोत्तरदिशौ पार्श्वे भवत , यदा तु दक्षिणाभिमुखस्तिष्ठत्यश्वस्तदा पूर्वपश्चिमदिशौ पार्श्वे भवत इति कृत्वा अश्वपार्श्वे दिशादृष्टिः कर्तव्येति कथितमिति क्रमेणाश्वपार्श्वाभ्यां सर्वदिक् सम्बन्धादिति ।

( अवान्तरदिश पर्शव इति ) वायव्यनैऋत्यादिका अवान्तरदिशोऽश्वस्य पर्शवः पार्श्वे विद्यमानानि अस्थीनि उभयोः पार्श्वदिक्—सम्बन्धस्य समानत्वादिति ।

**पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो-मांसानि । ऊवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लो-**

( ऋतवोऽङ्गानीति ) ऋतवो वसन्तप्रभृतिका एवाश्वास्याङ्गानि शरीरावयवा उभयोः शरीरसंवत्सराङ्गत्वसामान्यात् । यथा ऋतवो वसन्ताद्याः संवत्सरस्यावयवभूतास्तथा प्रकृतेऽपीति अश्वशरीरावयवे वसन्तादिदृष्टिः कर्तव्येति ।

( मासाश्चार्धमासाश्च पर्वाणीति ) तत्र पर्वाणि सन्धयो मासा-श्चैत्रादिका द्वादश त्रयोदश वा अर्धमासाः शुक्लपक्षादिकाः । उभयोः शरीरसंवत्सरसन्धिसमानत्वादिति ।

( अहोरात्राणि प्रतिष्ठेति ) अहोरात्राणि मेध्यस्याश्वस्य प्रतिष्ठा पादौ । प्रतिष्ठत्येभिरिति प्रतितिष्ठाः पादाः अहोरात्राणीत्यत्र बहुवचनं प्राजापत्यदैवपित्र्यमानुषाहोरात्राभिप्रायेण । पादाभ्यामेवाश्वसंव-त्सरात्मनौ प्रतितिष्ठत इति प्रतिष्ठितत्वसामान्यात् । अश्वपादयोरहो-रात्रदृष्टिः कर्तव्येति भावः ।

( नक्षत्राण्यस्थीनीति ) नभसि परिदृश्यमानानि नक्षत्राणि अश्व-स्यास्थीनि । उभयोः स्वच्छत्वसामान्यात् । अश्वस्यास्थनि नक्षत्रदृष्टिः कर्तव्येति ।

( नभो मांसानीति ) नभो नभस्था मेघा मांसानि रुधिरोदकसे-चकत्वासामान्यादिति ।

( उवध्य सिकता इति ) उवध्यम् अर्धजीर्णं घासाद्यशनं सिकता वालुका विश्लिष्टावयवत्वस्य समानत्वादिति ।

(सिन्धवो गुदा इति) गुदा नाड्य एव सिन्धवो नद्यः अवयवाभि-प्रायेण बहुवचननिर्देशः स्यन्दनवत्वविशिष्टबहुत्वसामान्यात् । अश्वना-डीषु नदीदृष्टिः कर्तव्येति ।

**मानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमानि उद्यन् पूर्वार्द्धो निम्लोचन जघनार्द्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥**

( यकृच्च क्लोमानश्च पर्वता इति ) यकृच्च क्लोमानश्च हृदयस्याधोदेशे विद्यमानौ दक्षिणोत्तरभागयोः स्थितौ मांसपिण्डौ पर्वताः काठिन्योन्नतत्वपिण्डाकारत्वसादृश्यात् । क्लोमान इत्यत्रैकस्मिन् व्यत्ययाद् बहुवचनम् इति ।

( ओषधयश्च वनस्पतयश्च लोमानीति ) लोमान्योषधयः फलपाकान्ता व्रीह्यादयः क्षुद्रत्वसामान्यात् लोमग्रहणं केशानाप्युपलक्षकम्-तेन केशा वनस्पतय आम्रादिवृक्षाः महत्वस्योभयत्रापि समानत्वात् ।

( उद्यन्पूर्वार्ध इति ) उद्यन् उदयं गच्छन् मध्याह्नपर्यन्तं सूर्योऽश्वस्य पूर्वार्धः शरीरस्यपूर्वभागः पूर्वत्वसामान्यात् निम्लोचञ्जघनार्ध इति निम्लोचन्नस्त गच्छन् सूर्योऽश्वस्य जघनार्धो नाभेरधोभागोऽपरत्वसादृश्यात् । अश्वस्य पूर्वार्धपरार्धभागयोरुद्यतोऽस्तमयतः सूर्यस्यदृष्टिः कर्तव्येति ।

( याद्विजृम्भते तद्विद्योतते इति ) अश्वस्य यद्विजृम्भणं गात्राणां विनामनेन मुखविदारणं तत् विद्योतते विद्योतनम् । मुखव्यादानमेवान्तर द्युप्रकाशकारणत्वात् विद्युत् । उभयोश्च मेघविदारकत्वसामान्यादिति ।

( यद्विधूनते तत् स्तनयति ) यद्विधूननमश्वस्य गात्रकम्पनं तत् स्तनयति । अश्वस्य रोमकम्पनमेव मेघशब्दो गर्जनशब्दसामान्यादिति ।

( यन्मेहति तद्वर्षतीति ) यन्मेहनं मूत्रनिःसारणं तद्वर्षण भूसेचनत्वसामान्यात् ।

( वागेवास्य वागिति ) अस्याश्वस्य वाक् ह्रेषाशब्दो वागेय नात्र कल्पना कर्त्तव्येति ॥ १ ॥

**अहर्वा अश्वम्पुरस्तान्महिमान्वजायत तस्यपूर्वे समुद्रे योनी रात्रिरेनम्पश्चान्महिमान्वजायत । तस्यापरे समुद्रे**

अथ यज्ञीयाश्वस्य स्तुतयेऽश्वस्य संज्ञपनात् पूर्वं पश्चाच्च गृहवर्तनतत्स्थानविषयकं च दर्शनमाह—

( अहर्वेत्यादि ) अश्वस्याग्रतः पृष्ठतश्च सुवर्णरजतनिष्पन्नौ महिमाख्यौ पात्रविशेषौ भवतः । तयोर्द्वयोर्मध्येऽश्वं पुरस्तात् । अत्र विभक्ति व्यत्यासेनाश्वस्य पुरस्तात् पुरतो महिमा महिमानामको ग्रह-विशेषोऽहरेव अन्वजायत समपद्यत अभूदित्यर्थः । अर्थात् महिमाख्य—ग्रहविशेषेऽहर्भावना उपासकैः कर्त्तव्या । अहर्वत् सौवर्णपात्रस्य यज्ञीयस्यापीषत्पीतप्रभायुक्तत्वात् । तस्य सौवर्णग्रहस्य पात्रापरपर्यायस्य पूर्वे । अत्रापि विभक्तिव्यत्यासस्तेन पूर्वे पूर्वदिगवस्थितः समुद्रे समुद्रः यो-निरासादनस्थानम् । सौवर्णपात्रग्रहासादनस्थलविशेषे पूर्वसमुद्रदृष्टिः कर्तव्योपासकैरिति । अथवा महिमान्वजायतेत्यत्रानुशब्दो लक्षणार्थः तेन कर्मप्रवचनीयत्वात् कर्मप्रवचनीययोगेऽश्वात् द्वितीया ततश्च पुरस्तात् संज्ञपनात् पुरस्तात्पूर्वमश्वमनु लक्ष्यीकृत्य महिमा महत्त्वयुक्तत्वात् महिमानामकः सौवर्णो ग्रहोऽजायत प्रावर्तत स चाहर्दिनं वै दीप्तिसामान्यात् । तस्य सौवर्णग्रहस्य पूर्वः समुद्रो यानिरासादनस्थानं पूर्वत्वस्योभयत्रापि समानत्वादिति ।

( रात्रिरेनं पश्चान्महिमान्वजायत इति ) अत्रापि विभक्ति—व्यत्यासात् पश्चात् अश्वास्य पश्चात् यो राजतो महिमानामको ग्रहविशेषः सा रात्रिन्वजायत समभवत्, शुक्लत्वसामान्यात्, चन्द्रिकायां राजते च शुक्लत्वस्य समानत्वात् । तस्य राजतस्य ग्रहस्य अपरे अपरः पश्चिम-दिगवस्थितः समुद्रे समुद्रः योनिरासादनस्थलम् । एतौ वै महिमानौ महिमाख्यसौवर्णराजतग्रहौ अश्वमश्वस्याभितः पुरतः पृष्ठतः पूर्वोत्तर-पार्श्वयोः सम्बभूवतुः प्रतिष्ठितौ समभवताम् । एतादृशमहिमाविशिष्टोऽय-

**योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥**

मश्वमेधीयोऽश्व इत्यश्वस्तुतिर्भवति । पुनरपि हयवाज्यर्वाश्वरूपमास्थाय देवगन्धर्वादीनां वोढा भवतीति अश्वस्तुतिमेवाह—

( हयो भूत्वेत्यादि ) सोऽयं पूर्वोक्तमहिमाशाल्यश्वो हयो भूत्वा हयत्वजातिवैशिष्ट्यमासाद्य देवानिन्द्रादीनवहत् देवत्वमगमत् । देवानां वोढाऽभवदित्यर्थः । तथा वाजी भूत्वा गन्धर्वानवहत् तेषां वाहको जातः । तथा अर्वा भूत्वा असुरानवहत् । तथा अश्वजातीयको भूत्वा मनुष्यानवहत् । एक एवायमश्वो महिमातिशयात् अनेकजातीयको भूत्वा देवादीनां वोढाऽभवदित्यर्थः । न चाश्वो वाहनतां गत इति वाहनत्वकथनात् स्तुतिविरुद्धा निन्दैवाभूदश्वस्य न स्तुतिरिति वाच्यम् । वाहनत्वस्य स्वाभाविकत्वात् । अयमाशयः अश्वजातीयस्य वाहनत्वं स्वाभाविको धर्मः तत्त्यागस्यानुचितत्वात् "सहजं कर्म कौन्तेय सदोषमपि न त्यजे" दिति स्मृतेः । ततश्च यत्र तत्रायमवस्थितः स्यात् तत्र तत्र तस्य तादृशं कर्मावश्यकमेव । ततश्च देवादीनां वहनात् सोपि देवभावमासादितवानिति देवत्वप्राप्त्या तस्य स्तुतेरेव करणादिति ।

( समुद्र एवास्य बन्धुरिति ) अस्याश्वस्य समुद्र एव बन्धुः समुद्रे बन्धुदृष्टिः कर्तव्येति । कथं समुद्रो बन्धुः तत्राह—

( समुद्रो योनिः ) अस्याश्वस्य समुद्रः प्रसिद्ध एव योनिरुत्पत्तिस्थानम्

उच्चैः श्रवः प्रभृत्यश्वानां तत उत्पत्तेः श्रवणात् । अथवा समुद्रः परमात्मा समुत्पद्य भूतानि द्रवन्ति लयं गच्छन्ति अस्मिन्निति समुद्रः स परमात्मा एवास्य बन्धुर्बन्धनमिति । तथा समुद्रः परमात्मैव

इति बृहदारण्यकोपनिषद् प्रथमाध्यायस्य प्रथमं ब्राह्मणम् १

योनित्वस्पत्तिकारणम् एतादृशोऽश्वः सर्वथैव महिमातिशययुक्त इत्यश्वस्तुति-र्भवतीति ।। २ ।।

इति बृहदारण्यकोपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
प्रथमं ब्राह्मणम् ।। १ ।।

प्रथमब्राह्मणोक्तप्रकारेणाश्वमेधे मुख्याङ्गभूतश्वमदर्शनं कथयित्वा अश्वमेधसंबन्ध्यग्नौ तदङ्गभूतसंवत्सरकाले च परमात्मदृष्टिविधातुं प्रथमतोऽग्नेरुत्पत्तिप्रकारं दर्शयितुमाह—

( नैवेत्यादि ) इहास्मिन्संसारचक्रे किञ्च न किञ्चिदपि परिदृश्यमानं स्थूलावयवावस्थं वस्तुजातम् । अग्रे सृष्टेः पूर्वं नैवासीत न बभूव । नैव किञ्चदपि आसीत्, एतावता शून्यतैवासीदिति सशयो न कर्तव्यो यतोऽसत्कार्यवादस्यास्वीकारात् । यदि कदाचित् असत्सकाशादपि कार्यमसदात्मकं भवेत्तदा वन्ध्यापुत्रादितोपि कार्यं जायेत । असन्नपि बन्ध्यापुत्रादिरुत्पद्येत । नत्वेवं दृश्यते । यद्यपि नानुपमृद्य प्रादुर्भावादिति न्यायेन कारणविनाशानन्तरमेव कार्योत्पत्तिदर्शनात् । असत एव कारणत्वमायाति । तथापि तत्र न विनात्मकाभावस्य कारणता किन्तु कारणगतसूक्ष्मावयस्य भावस्यैव कारणता । यद्यभावात् भावोत्पत्तिः स्यात्तदा अभावस्य सर्वत्र सुलभतया सर्वं कार्यं सर्वदा सर्वस्माद् भवेत् । एवञ्च घटार्थी बहुलायाससाध्यकारणान्वेषणं न कुर्यात्, कुर्वन् दृश्यते तस्मात् उत्पत्तेः पूर्वं शून्यं नासीत् किन्तु यथा घटोत्पत्तेः प्राक्—नासीदिति ।

प्रतीतौ कम्बुग्रीवात्वावस्थापूर्वकालिकमृत्पिण्डावस्थैव विषयीभवति तथैवेहापि उत्पत्तेः पूर्वं किञ्चिदपि नासीदिति प्रतीतौ जगतः परिदृश्यमानस्थूलावस्थाया विरोधिनी काचिदव्यक्तावस्थैव प्रतीयते । ततश्च जगतः स्थूलावस्थापूर्वं नासीत्येवार्थो न तु शून्यतैवासीदिति । इमामेव

# अथ प्रथमाध्याये द्वितीयं ब्राह्मणम् ।

**नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति ।**

श्रुतिमुपलभ्य केचन भ्रान्ताः श्रुतौ शून्यवादमपि स्वीकुर्वन्ति, तन्न सम्यक् श्रुतियुक्तिविरुद्धत्वात्तस्येति । अथेद परिदृश्यमानं स्थूलं जगत् प्रागुत्पत्तेः स्थूलावस्थाविरोधिन्याऽवस्थयाऽवस्थितमिति पूर्ववाक्येनावगम्यते तत्र कासौ कीदृशी च सा यया आवृतमासीदिति जिज्ञासायामाह—

( मृत्युनैवेदमावृतमासीदशनाययेति ) मृत्युना तमःशरीरकेन परमात्मनेदमावृतम् । अत्र मृत्युपदेन मृत्युसंज्ञकाचिच्छरीरकः सर्वकारणीभूतः भगवान् श्रीरामो बोधितो भवति "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरमपहतपाप्मा दिव्यो देव एको नारायणः" इति श्रुत्यन्तरे मृत्युशब्दस्य तमसि प्रयोगदर्शनात् । ततश्च तमःशरीरकेन परमात्मनेदमावृतमासीत् ।

( अशनाययेति ) तत्र अशनाया नाम संहरणविषयिणीच्छा । तयेच्छया इच्छावान् परमात्मा लक्षितो भवति । एवञ्च स्थावरजङ्गमात्मकसर्वलोकसंहारेच्छावता सर्वसमर्थेन भगवता तमःशरीरेण फलित—पुष्पितवृक्षमिव परिदृश्यमानं स्थूलावस्थाविशिष्टं जगदावृतमासीत् । स्वकीयां स्थूलावस्थां परित्यज्य तमःशरीरकपरमात्मावस्थयाऽवस्थितमभूदिति । अशनाया शब्दस्य मृत्युपदबोध्यपरप्रयोगः कृतः तत्र किं कारणमिति जिज्ञासायामाह—

( अशनाया हि मृत्युरिति ) अशितुं भोक्तुमिच्छा अशनाया तद्वान् मृत्युः । अयं भावः यदा लोको बुभुक्षितो भवति तदा

बुभुक्षामुपशमितुं व्रीह्यादिकमश्नाति । तदलाभे जन्तूनपि हिनस्ति इति जीवविनाशस्य बुभुक्षानिमित्तत्वात् अशनाया मृत्युत्वं सम्भवति मरणहेतुत्वात् । यथा जीवानां मरणकारणत्वेन कृतान्तो मृत्युस्तथा तन्निमित्तत्वादशनायापि मृत्युर्भवतीति । यद्यपि अशनायामृत्युशब्द-योर्भिन्नार्थकत्वम् मृत्युशब्दस्य तमः शरीरकपरमात्मेत्यर्थः । अशनाया-शब्दस्य सञ्जिहीर्षार्थस्तथाप्यर्थद्वयस्यैकीकरणात् । सर्वम् समञ्जसं भवतीति ।

( तन्मनोऽकुरुतेत्यादि ) तत स मृत्युतम शरीरकात् परमात्मा श्रीरामः । अहम् आत्मन्वी जडचेतनशरीकः शरीरवान् स्याम् भवेयमि-त्येव सङ्कल्पं कृत्वा मनोऽकुरुत मनस उत्पत्तिं कृतवान् अकरोत् । यद्यपि संकल्पादिकं मनोधर्म इति मनस उत्पत्तेः पूर्वं कथं संकल्पो जातस्तथापि "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । "न तस्य वेद्यं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ।" "यन्म-नसा न मनुते ये नाहुर्मनो मतम्" इत्यादिश्रुतेः सर्वसमर्थस्य सहायकान्तर-निरपेक्षस्यापि परमात्मनो भगवतः श्रीरामस्य मनोऽभावेपि सङ्कल्पादि-सम्भवात् । नहि लौकिकपदार्थसाहाय्यं भगवतोपेक्षित भवति स्वेच्छया लीलयैव सर्वकरणात् न च संहरणेच्छावतो भगवतः सिसृक्षाकार्यरूप-मनसः सृष्टिः कथमुपपद्यते सञ्जिहीर्षासृष्ट्योः परस्परं विरोधात् । न हि यथा एकस्मिन् एकत्र तमःप्रकाशयोः सामानाधिकरण्यं न भवति तत्कस्य हेतोः ? उभयोः परस्परं विरोधात् । तथा प्रकृते एकदैव भगवति सञ्जिहीर्षामनसः सृष्टिश्च कथमिव स्यादिति वाच्यम् । सृष्टिं कृत्वा तदनन्तरं संहरणं सर्वस्य करिष्यामीत्येवंभूतसृष्टिसंहारलक्षण-विहारादिविषयकेच्छाया एव प्रकृते अशनायाशब्देन विवक्षितत्वात् । अत्र श्रुतौ मनःपदेन महत्तत्त्वं कथ्यते "मनो महान्मतिर्ब्रह्म" तिस्मरणात् मनस उत्पत्तिकथनमुपलक्षणम् । अहंकारादिभूतसृष्टेः । यदि कदाचित्मनः पदमन्तःकरणबोधकं भवेत् तथापि मनःशब्दः स्वपूर्वकालिकमहदादी-

सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति नामप्युपलक्षकः महत्तत्वादिसृष्टिं विना तत्पूर्वं वा मनःसृष्टेरसम्भवात् । यथा कपालोत्पत्तिमन्तरा कपालोत्पत्तेः प्राग् वा घटोत्पत्तिवत् । कारणाभावे कार्यसद्भावस्यासम्भवात् । अन्यथा तयोः कार्यकारणभावो न स्यादिति ।

(सोऽर्चन्नचरदिति) स मृत्युशरीकः परमात्मा श्रीरामो मनः सृष्ट्वा अर्चन् प्रीणयन् पूजयन् स्वात्मानमेव । अर्चायाः कर्तापि स एव कर्मकारकमपि स्वयमेव । एवञ्च स मृत्युशरीरकः परमात्मा जगद्व्यापारलीलया स्वकीयमात्मानमेव प्रीणयितुमचरत् चरणं कृतवानिति । वेदव्यासेनापि कथितम् "लोकवत्तु लीला कैवल्यमिति" स्थावरजङ्गमात्मकजगत्सृष्टेर्लीलैव केवलं प्रयोजनम् । तथा हि जन्मजरामरणादिलक्षणविविधदुःखबहुलं संसारमुत्पादयतः समवाप्तसकलकामस्यापि भगवतः प्रवृत्तिर्न स्वार्था न वा परार्थापि सम्भवति परार्थतायामपि सूक्ष्मस्वार्थस्य निहितत्वात् अन्योन्याश्रयाच्च । ततः प्रयोजनाभावात् कथं भगवतः प्रवृत्तिः संसाराय प्रेक्षावत्प्रवृत्तेः प्रयोजनाभावेनासम्भवादित्यादिक "न प्रयोजनवत्वादि"ति सूत्रेण पूर्वपक्षं कृत्वा । "लोकवत्तु लीलाकैल्यमि"-तिसूत्रेण समाधानं कृतम् । तदयमर्थः । यथा लोकेऽवाप्तसकललोककामस्यापि महाराजादेः केवलं लीलाप्रयोजनैक कन्दुकादिक्रीडा, एवमेवाप्तसकलकामस्य परमात्मनोऽपि लीलाप्रयोजना जगत्सृष्टिः सम्भवत्येवेति । न च हीनमध्यमोत्तमान् तिर्यङ्मनुष्यदेवादीन् विषमान् सृजतः परमेश्वरस्य वैषम्यं दुखःबहुलनरकादिसृष्टिकरणान्निर्घृणत्वञ्च कथं न स्यादिति वाच्यम् तस्य कर्म सापेक्षत्वात् । उक्तञ्च भगवद्भिः श्रीश्रुतानन्दाचार्यः:-

'विकारश्च रामो दयाब्धिस्तथात्वे दयाशून्यतां पक्षपातश्चनैति ।
प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्राणिनां प्राच्यकर्म"।। इति ।

जगत्सृष्टौ परमेश्वरः साधारणं कारणम् । असाधारणंकारणन्तु तत्तज्जीवानां तादृशं तादृशं कर्मैव यस्य यादृशं कर्म तस्य तादृशीमेव योनिं प्रयच्छति तदीयकर्मसाहाय्यमवाप्य । अतो न पक्षपातादिदोषः परमेश्वरस्य यथा । वारिदविमुक्तं जलमेकरसमेव किन्तु तत्तद्भूविकारानासाद्यानेक-प्रकारकं भवति मधुरादिरसभेदभिन्नम् । तदुक्तं " साधुकारी साधुर्भवति पापकारी पापो भवति ।

"निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥ इति

अत्र निमित्तमात्रमित्यस्य साधारणमित्यर्थः असौ तमःशरीरकः परमात्मा सृज्यानां सृज्यमानस्थूलवस्तूनाम् सर्गकर्मणि उत्पत्तौ निमित्तमात्रमेव साधारणमेव कारणम् कार्यत्वावच्छिन्नकार्यतानिरू-पितकारणताशाली भवति । ननु परमेश्वरस्य सृष्टौ साधारणकारणत्वे सृष्टौ असाधारणं किमिति जिज्ञासायामाह प्रधानेत्यादि । यतो यस्मात्का-रणात् सर्गकर्मणि सृज्यशक्तयोऽदृष्टं धर्माधर्मपर्यायमेव प्रधानकारणीभूता असाधारण कारणम् । कार्यत्वातिरिक्तदेवत्वादिधर्मावच्छिन्नकार्यतानिरू-पितकारणताशालीत्यर्थः । अर्थात् यथा मेघजनित जल वनस्पतिसमु-दायानां कारणं समानं भवदपि तत्तद्बीजं तत्तदंकुरोत्पत्तौ प्रधानमिति यवचणकादिभेदो भवति, तथैव साधारणकारणत्वेपि परमेश्वरस्य देवादिकर्मभेदेन नारकादिहीनमध्यमोत्तमभेदेन सृष्टिर्निर्मि-यमानापि परमेश्वरे वैषम्यं नैर्घृण्यं नापादयतीति । न च प्रलये जीवानां परमेश्वरेण सहाविभागात् जीवाश्रितकर्मणामभावात् सर्गकालिकप्राथ-मिकसृष्टौ स्वेच्छामात्रेण हीनमध्यमोत्तमभावेन जगदुत्पादयतो भगवतो वैषम्यादिदोषा नापगच्छतीति वाच्यं अनादित्वात् । अयमर्थः जीवा अनादयस्तेषां कर्माण्यपि तथाविधान्येवेति प्रलय काले कर्मसत्त्वात्तदादाय सृष्टिं विदधतः परमेश्वरस्य वैषम्यादिकं न भवति । न च जीवो यद्य-

नादिस्तदा "सदेव सोम्येदमग्र आसीदित्यादिना योयमविभागः प्रतिपाद्यते परमात्मना सह जीवानां तत्कथं संगतमिति वाच्यम्, भावानवबोधात् । तथा हि प्रलये जीवा जडा वा न विभक्तनामरूपा अपि तु अविभक्तनामरूपा इति अविभक्तनामरूपवत्त्वेनाऽभेदाकारकस्फूर्तिमात्रेण विभागव्यवहारस्य सम्भवात् । जीवानामनादित्वे संशयो न करणीयः "न जायते म्रियते वा बिपश्चित् नायं कुतश्चिन्न बभूव कश्चित्" "प्रकृतिं पुरुषं चैव विध्यनादी उभावपि" इत्यादिश्रुतिस्मृतिभ्यां जीवादीनामनादित्वबोधनात् । न च कर्मणामनादित्वं स्वीकृत्य तद्द्वारा जगत्सर्जने वैषम्यादिदोषं यदि निराकरोषि तदा प्रधानादय एव जगतः कारणमंगीक्रियतां किमन्तर्गडुना परमेश्वरेणेति वाच्यम्, प्रधानादीनामचेतनत्वात् । प्रधानादयोऽचेतना अचेतनत्वादेव तेषु प्रधानादिषु सृष्टिप्रयोजकसार्वज्ञत्वसर्वशक्तित्वादिधर्मा न सन्ति किन्तु परमेश्वर एव "यः सर्वज्ञः स सर्ववित्" "सर्वज्ञतातृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः अनन्तशक्तिश्चे"त्यादिश्रुतिभिः ते धर्माः सन्तीति परमेश्वर एव कारणमिति सृष्टेः प्रयोजनं तल्लीलैवेति ।

विशेषस्त्वन्यत्र द्रष्टव्यः । व्याख्यानमात्रप्रवृत्तेन श्रुत्यक्षरार्थ एव विवृत इति ।

( तस्यार्चत इत्यादि ) तस्य मृत्युशरीरकस्य परमात्मनः अर्चतः पूजां कुर्वतः प्रीणयितुं प्रवृत्तस्य परमेश्वरस्य भगवतः श्रीरामस्य सकाशात् आपो रसात्मिका अजायन्त उत्पन्ना अभवन् । आकाशादिसृष्टेरनन्तरं जलसृष्टिर्जाता रसप्राधान्यादप्शब्दप्रयोगः ।

' ततः स्वयंभूर्भगवान् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीजमवासृजत् ॥ " इति स्मृतेश्च ।

( अर्चते वै मेत्यादि ) अत्र वैशब्दोऽवधारणार्थपरकः अर्चते वै

**तदेवार्कस्यार्कत्वम् । कं ह वा अस्मै भवति य एवमेतदर्क-स्यार्कत्वं वेद ॥ १ ॥**

**आपो वा अर्कस्तद्यदपां शर आसीत्समहन्यत ।**

अर्चनार्थं प्रवृत्ताय मे मह्यं कम् जलं रसप्रधानकम् अभूत् समुत्पन्नम् । एवं स परमात्मा मृत्युशरीरकोऽमन्यतेति ।

( तदेवार्कस्यार्कत्वमिति ) यस्मात्कारणा मृत्युशरीरकः परमेश्वर एवमर्चते वै मे कमभूदित्यमन्यत तस्मादेव कारणात् एतादृशमीश्वरस्य मननमेव, य अर्कस्यार्कशब्दशब्दितस्य परमेश्वरस्यार्कशब्दप्रवृत्तौ निमित्तं भवतीति । परमात्मनोऽर्क इति नाम "अर्को वाजसनिः शृङ्गी " इति सहस्रनामपाठादिति ज्ञातव्यम् । परमात्मनोऽर्क नामनिर्वचनज्ञानस्य किं फलमिति जिज्ञासायामाह—

( कं ह वेत्यादि ) य उपासक एवं यथोक्तमेतदर्कस्य परमात्मनोऽर्कत्वं वेद विजानाति ह वै निश्चितमेवास्मै उपासकाय कमुदकं सुखं वा भवति नामसामान्यात् । यः पूर्वोक्तप्रकारेणोपासनं करोति तस्य सुखमेवैकान्ततो भवति कदाचिदपि स दुःखभागी न भवतीति ॥ १ ॥

अथ ब्रह्माण्डस्य समस्तस्यापि परमेश्वरात्मकभूतपरिणामत्वम् जलसकाशात् पृथिवीद्वाराऽग्नेरुत्पत्तिं दर्शयितुं जलस्य परमेश्वरात्मकत्वमाह—

( आपो वा अर्क इति ) आपो जलानि अर्कं अर्कशब्दितभगवत्स्वरूपाः सञ्जाता इत्यर्थः ।

( तद्यदपां शर आसीदिति ) तत्तत्राप्सु भूतान्तरसम्पृक्तासु अपां जलानाम् भूतान्तरसम्पृक्तानामपां य शरः सारांशो दध्नो मण्डांशवदासीत् सम्बभूव तत् ।

**सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्त्ताताग्निः ॥ २ ॥**

**सत्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयं स एष**

(समहन्यत) तत् वाह्येन तेजसा बाह्यान्तः परिपाचितं सत् समहन्यत समुदायभावमापद्यत। अतिशयेन कठिनमभूत्। जलस्य सारभूतोऽपि तरलायमानो भागो बाह्यतेजसा परिपाचितं सत् काठिन्यमवाप्तवानित्यर्थः।

(सा पृथिव्यभवदिति) ततः संघातभावप्राप्त्यनन्तरम् संहन्यमानजलादिभूतेभ्यः सकाशात् पृथिव्यभवत्। सा पृथिवीरूपाऽभवत्। पृथिवीलक्षणा जाता, पृथिव्या उत्पत्तिरभूत्। ताभ्योऽद्भ्यो विराट्शब्दवाच्यमण्डं समुत्पन्नमिति भावः।

(तस्यामश्राम्यदिति) तस्यां पृथिव्याम् उत्पादितायामण्डाकारेण परिणतायां पृथिव्यां सत्याम्, मृत्युशब्दबोध्यः परमात्माऽश्राम्यत् प्रयत्नं कृतवान्। प्रकृते श्रान्तिशब्दः स्वकारणलक्षणया प्रयत्नपरकः तेनायतत प्रयत्नवानभूत्। अथवा अश्राम्यत् लोकवत् श्रमयुक्तोऽभवत्। यथा लोके लोकः श्रमवत् कार्यकरणात् कालेन परिश्रान्तो भवति तथा सोपि परमात्मा श्रान्तोऽभवदिति।

(तस्य श्रान्तस्येत्यादि) तस्य मृत्युशब्दशब्दितस्य परमात्मनः श्रान्तस्य कृतप्रयत्नस्य श्रान्तियुक्तस्य वा अत एव तप्तस्य तप्त इव तप्तस्य खिन्नस्य सृज्यवर्गपर्यालोचयितुः परमात्मनः शरीरात् तेजो रसः तेज एव रसस्तेजोरसोऽग्निर्निरवर्तत समुत्पन्नोऽभूत्।

(स त्रेधेत्यादि) स मृत्युलक्षणपरमात्मशरीरात् समुत्पन्नोऽग्निरात्मानं स्वस्वरूपं त्रेधा त्रिप्रकारेण व्यकुरुत व्यभजत् विभागमकरोत्। किं तत् रूपत्रयं तत्राह—

**आत्मानं त्रेधा विहितस्तस्य प्राचीदिक्शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीचीदिक् पुच्छमसौ चासौ च सक्थ्यौ**

( आदित्यमित्यादि ) आदित्यं तृतीयं, वायुं तृतीयं अग्निवाय्वादित्यरूपेण त्रिप्रकारकमात्मानमकरोत् । तत्र त्रयाणां रूपाणां मध्ये चित्याग्निरवयवी वाय्वादित्यौ अवयवभूताविति । तत्राग्निवाय्वपेक्षया आदितस्य तृतीयत्वम् । अग्न्यादित्यापेक्षया वायोस्तृतीयत्वम् एवमेव श्रुत्यक्षरार्थोऽनुगृहीतो भवति । यथा श्रुते वायोरेव तृतीयत्वं भवति न त्वादित्यस्य तस्मात् पूर्वोक्त एवार्थं इति ।

( स एष प्राण इत्यादि ) यः स्वात्मानं त्रेधा त्रिप्रकारेणात्मानं विभक्तोग्निवाय्वादित्यरूपेण वाय्वादित्यांशक एषोऽग्निः स एष प्राणः परमात्मा । तेषु अग्न्यादिषु परमात्मदृष्टि करणीयेति । य एषोग्निरर्क इत्युत्तरप्रकरणे अग्नौ अर्कशब्दबोध्य परमेश्वराध्यासस्य वक्ष्यमाणत्वादिति ।

( तस्येत्यादि ) य आत्मानं प्रकारत्रयेण विभजितवान् तस्याग्नेः प्राची पूर्वदिशैव शिरो मस्तकम् । तदीयशिरःप्रभृतिशरीरावयवेषु प्राच्यादिबुद्धिः कर्तव्येतिभावः । शिरसः पूर्वादिक्सम्बन्धित्वात्तत्र तद्बुद्धिः कर्तव्येति ।

(असौ चासौ चेर्मौ इति) तस्याग्नेरीर्मौ बाहू असौ ऐशान्यादिक् असौ चाग्नेयीदिक् ऐशाग्न्येयावेवास्य बाहू पार्श्वदिक्सम्बन्धात् । पूर्वमुखावस्थितस्याग्नेरैशान्याग्नेयावेव भुजावित्यर्थः ।

( अथास्येत्यादि ) अथानन्तरमस्य चित्यस्याग्नेः प्राङ्मुखोपविष्टस्य पुच्छं जघन्योभागः प्रतीची पश्चिमादिगेव जघन्यत्वस्योभयत्रापिसमानत्वात् तत्पुच्छे प्रतीचीत्व बुद्धिः कर्तव्येति भावः ।

**दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥**

( असौ चासौ च सक्थ्यौ ) तस्य चित्यस्याग्नेः सक्थ्यौ सक्थिनी ऊरूवित्यर्थः असौ चासौ च वायव्यनैर्ऋत्यदिशावेव । सक्थ्यौ च छान्दसः प्रयोगः । तदीय सक्थ्नोर्वायव्य नैर्ऋत्यदृष्टिः कर्तव्येति ।

( दक्षिणा चौदीची च पार्श्वे ) तस्य चित्यस्याग्नेः पार्श्वे दक्षिणा चौदीची च उभयदिक् सम्बन्धस्योभयत्रापि समानत्वादग्निपार्श्वे दक्षिणोदीचीबुद्धिः कर्तव्येति ।

(द्यौः पृष्ठमित्यादि) तस्य चित्यस्याग्नेः पृष्ठम् द्यौरेव । एवं तदग्नेरुदरम् अन्तरिक्षमाकाश एव । इय परिदृश्यमाना पृथिव्येव तस्य चित्यस्याग्नेरुरः अधोभागत्वस्य सामान्यात् । द्युरादिषु तदग्नेः पृष्ठादिबुद्धिः कर्तव्येति । अथानन्तरमुपास्यस्याग्नेः प्रतिष्ठितत्वं गुणं दर्शयितुमाह :—

( स एष इत्यादि ) स एषोग्निरप्सु कारणलक्षणासु प्रतिष्ठितः स्थितः । एतस्याग्नेरप्प्रतिष्ठितत्वं तन्मूलोत्पत्तिकत्वेनेति बोध्यम् । प्रकृतस्य यथोक्तरूपेणोपासनायाः किं फलमिति जिज्ञासायामाह—

( यत्र क्व चेत्यादि ) य उपासक एवं विद्वान् एवमप्सु प्रतिष्ठितमग्निं विजानाति प्रतिष्ठितत्वगुणयुक्तस्याग्नेरुपासनं करोति तादृशोपासको यत्र क्व चैति यत्र कुत्रापि गच्छति तदेव प्रतितिष्ठति तत्रैव प्रतिष्ठां प्राप्नोति न हि स्वगेहे स्वदेशे स्वपरिचितस्थाने एव प्रतिष्ठाभाग् भवतीति, किन्तु सर्वत्र परिचितापरिचितस्थानेषु स्वदेशपरदेशादौ वा सर्वत्र प्रतिष्ठां प्राप्नोतीति ॥ ३ ॥

यथोक्तप्रकारेणार्कप्राणपदबोध्यपरमेश्वरदृष्टि विशिष्टाश्वमेधावयवचित्यस्याग्नेरुत्पत्यादिप्रकारं दर्शयित्वा ततः परमश्वमेधाख्ययज्ञस्य अङ्गभूतं

**सोऽकामयत द्वितीयो म आत्मा जायतेति स मनसा वाचं मिथुनं समभवदशनाया मृत्यु-**

सम्वत्सरकालं मृत्युपदबोध्यपरमेश्वरदृष्टिविशिष्टं कथयितुम् प्रकरणान्तरमिव प्रकरणं दर्शयितुमाह—

(सोऽकामयतेत्यादि) अथवा तेजोरसोनिरवर्तताग्निरित्यत्रादनकर्तुः सर्गः कथितः सम्प्रति तस्य स्थित्यर्थमन्नसर्गं दर्शयितुमाह—

( सोऽकामयतेत्यादि ) स पूर्वोक्तः सञ्जिहीर्षुर्मृत्युः मनसा सह कृतः सूत्रात्मा अकामयत संकल्पं कृतवान् । तत्र संकल्पविषयं दर्शयितुमाह –

( द्वितीयो म आत्मा जायेतेति ) पूर्वसृष्टाग्निरूपापेक्षया द्वितीयोऽन्यो मे ममात्मा जायेत जायताम् । सूक्ष्मशरीरापेक्षया स्थूलं मम देहान्तरं भवतु—

इत्याकारिकामिच्छां स मृत्युःकृतवानिति ।

( स मनसा वाचं मिथुनं समभवदिति ) स मृत्युः संकल्पकरणानन्तरम् मनसा पूर्वमुत्पन्नेन वाचं त्रयीलक्षणां ऋग्वेदादिलक्षणां वाणीं मिथुनं द्वन्द्वभावं समभवत् समभावयत् । मनसा वेदालोचनलक्षणां सम्भावनां कृतवान् सृष्टव्यप्रपञ्चस्य अवगतये ।

"नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ।। इति रीत्या

साक्षाद्वा चतुर्मुखादिद्वारेण मनसा वेदत्रयीं पर्यालोचयदिति । अथ सोऽकामयतेत्यत्र तत्पदेन सर्वनाम्नाऽव्यवहित पूर्वोक्तवैश्वानरस्यैव ग्रहणं न तु व्यवहितपूर्वस्य मृत्योरिति तां शङ्कामपनेतुं मृत्योरेव ग्रहणं भवतु अत आह –

( अशनायाहि मृत्युरिति ) ततश्चाशनायोपलक्षितमृत्युरेवात्र तत्पदेन संग्राह्यो न तु वैश्वानर इति ।

**स्तद्यद्रेतआसीत्स संवत्सरोऽभवत् । न ह पुरा ततः संवत्सर आसमेतावन्तं कालमबिभः । यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत ।**

**तं जातमभिव्याददात्स भाणमकरोत्सैव वागभवत् ॥४॥**

( तद्यद्रेत इत्यादि ) तत् तत्र मनसा त्रयीपर्यालोचनलक्षणसम्भोगे यत् रेतो वीजं कारणं प्रथमशरीरिणः प्रजायतेरुत्पत्तिकारणभूतमिदमित्थं कर्तव्यमित्याकारकं निश्चयात्मकं तेन संवत्सरलक्षणकालशरीरकः संवत्सरो विश्वकर्मा प्रजापतिरभवत् संवत्सराभिमानितया द्वितीय आत्मा बभूव । ततः पुरा इदमित्थं कर्तव्यमिति निश्चयरूपरेतःपदबोध्य कारणात् पूर्वं संवत्सरः कालविशेषो नासन् बभूव द्वादशमासपरिमाणकस्य संवत्सरस्य तत्काले निष्पत्तेरसम्भवात् । तमेतावन्त कालम् । यावता कालवशेषेण संवत्सरः परिपूर्णो भवति तावन्तं कालम् । अबिभः रेतःशब्दितकारणाकारेण भरणं कृतवान् धारणं कृतवानित्यर्थः ।

( तमेतावत इत्यादि ) तमेवं सृष्टं प्रथमशरीरिणं संवत्सरलक्षणं एतावतः कालस्य संवत्सरमात्रस्य परस्तादनन्तरम् द्वादशमासेषु परिपूर्णेषु सत्सु तदनन्तरं संवत्सरलक्षणं कुमारं द्वितीयमात्मानमिवासृजतोत्पादयामास । तं जातं समुत्पन्नं कुमारं संवत्सरम् उपलक्ष्याभिव्याददात् विशिष्य पुत्ररूपेण पर्यगृह्णात् । अथवा तमेवं सृष्टं प्रथमशरीरिणं संवत्सरं कुमारं मृत्युरभिव्याददात् मुखव्यादानमकरोत् ।

(सभाणमकरोदिति) संवत्सरलक्षणः कुमारो बालस्वभावात् भाणमित्याकारकं शब्दं कृतवान् ।

(सैव वागभवदिति) सैव भूरादि-व्याहृतिलक्षणा वाक् अभूत् शब्दसामान्यं समुत्पन्नं जातमित्यर्थः ॥४॥

अथ ऋग्वेदादिसृष्टिं दर्शयितुं भूमिकां दर्शयति–

**स ऐक्षत यदि वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदं सर्वमसृजत यदिद ।**

(स ऐक्षतेति) स अशनायावान् मृत्युः कृतशब्दं संवत्सराख्यं भीतमिव समुपलभ्य ऐक्षत विचारं कृतवान् । यदि वै इत्यत्र वा शब्दः प्रसिद्धार्थकः । यदि कदाचिदहमिमं संवत्सरं कुमारं स्रष्टव्यान्नकारणमभिमंस्ये आत्मानं कृतकृत्यं मंस्ये । तदा कनीयोऽन्नं करिष्ये । तदा अन्नमदनीयं वस्तु कनीयोऽल्पं करिष्ये । अयमाशयः क्षेत्रे उत्पन्नं बीजमल्पीयोपि वस्तु अन्नं करोति तदा भूयः कालपर्यन्तमदनीयं भवति । यदि बीजमेवोपभुज्येत तदा एकवारभक्षणेनैव समाप्तं स्यादन्नं किं पुनः कालान्तरे भविष्यतीति विचार्य बीजभक्षणादुपरतो भवति लोकस्तथैव मृत्युरपि विचारितवान् यदि बीजस्थानीयं संवत्सर भोक्ष्ये संहरणं करिष्यामि तदा कालान्तरे किं स्यात् भक्षणाय बहु चान्नं कर्तव्यं दीर्घकालभक्षणायेति विचार्य संवत्सरसंहरणादुपरराम ।

( स तया वाचा तेनात्मेनेदं सर्वमसृजत यदिदं किं चेति)

स एवंकृतविचारो मृत्युः क्रमेण तया वाचा संवत्सरात्मक कुमारवदन निष्पन्नयावाण्या भूरादि व्याहृतिरूपया वाण्या तेनात्मना संवत्सरलक्षणात्मना निमित्तभूतेन–

( यदिदं किं च ) यत् किंचिदिदं वाच्यवाचकलक्षणं तत्सर्वं जगत् असृजतोत्पादितवान् । स भूरिति व्याहरत् ।

"आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतय" इत्यादिना भूरादिशब्दानां सृज्यमाणजगत्कारणताया अवगमात् । एवं संवत्सराख्यकालस्य कार्यमात्रं प्रति साधारणकारणत्वाच्चेति सम्प्रति यदिदं किञ्चेत्युक्तं तत्प्रपञ्चयति–

**किं चर्चो यजूंषि सामानि छन्दांसि यज्ञान् प्रजाः पशून् स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वं सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥**

( ऋचो यजूंषीत्यादि ) तत्र ऋचो नियताक्षरपादबन्धसमन्विता मन्त्रविशेषाः अनियताक्षरपादा यजूंषि । ऋच एव स्तोमाक्षरसंयुक्ताः सामानि छन्दांसि गायत्रीप्रभृतिकानि । एतैर्विशिष्टानेतान् मन्त्रानसृजत मृत्युरिति । यज्ञान् तत्साध्यान् प्रजा यज्ञादि सम्पादकान् नरान् पशून् ग्राम्यानारण्यकान् यज्ञादिधर्मसाधनीभूतानेतान् सर्वानेवासृजत मृत्यु न च मिथुनीभूतेन वेदेन कथमृगादीनामुत्पत्तिस्तयोरभिन्नत्वात् । भेदे हि जन्यजनकभावो भवति न त्वभेदे इति वाच्यम्, कर्मविनियुक्तावस्थाविशिष्टरूपेण तेषामुत्पत्तिसम्भवादिति ।

( स यद्यदेवेत्यादि ) स मृत्युर्यद् यदेव कर्म तत्साधन फल वा असृजत उत्पादितवान्, तत्सर्वं सृष्टं वस्तु अत्तुं भोक्तुं संहर्तुमित्यर्थः, अध्रियत मनोधृतवान्, सृष्टं सर्वं संहर्तुमैच्छदित्यर्थः ।

( सर्वं वा अत्तीत्यादि ) सर्वं सकलमेवात्ति यस्मात् तस्मात् कारणाद् अदितेरदितित्वम् । अदितिशब्दवाच्यस्य परमेश्वरस्य सर्वसंहर्तृत्वादेव हेतोरदितिशब्दप्रवृत्तिनिमित्तमदित्वमिति । एतद्गुणविशिष्टमृत्योरुपासकस्य किं फलं भवति तत्राह–

(सर्वस्येत्यादि) य उपासको दितेर्मृत्युपदबोध्यपरमात्मनोऽदितित्वं सर्वसंहरणकर्तृत्वं विजानात्युपास्ते स सर्वैतस्यात्ता भक्षकोऽनुभविता भवति सर्वमेवास्योपासकस्यान्नमदनीयमनुभाव्यं भवति ।

(य एवमित्यादि) य उपासक एवमित्थमदितित्वमदितेः परमात्मनो वेद विजानाति तस्य सर्वमन्नमनुभाव्यमेव भवतीति ॥५॥

**सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति । सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्य-मुदक्रामत् । प्राणा वै यशोवीर्यम् तत्प्राणेषूत्क्रांतेषु शरीरं**

पूर्वोक्तप्रकारेणाश्वमेधाङ्गभूतयोरग्निसंवत्सरयोरुत्पत्तिप्रकारादिकं दर्शयित्वाऽश्वस्योत्पत्तिप्रकारमश्वमेधनिर्वचनमश्वमेधे आदित्यदृष्टिं च प्रतिपादयितुमाह –

( सोऽकामयतेत्यादि ) स प्रजापतिशरीरकः परमेश्वरोऽकामयत विचारं कृतवान् किं विचारितवान् तत्राह –

( भूयसेत्यादि ) भूयसातिमहता यज्ञेनाश्वमेधाख्येन भूयः पुनः पुनर्य-जेय अश्वमेधाख्ययज्ञेन परमात्मानं यक्ष्ये अथवा भूयः शब्दः परमेश्वरवाच-कस्ततश्च भूमानं परमात्मानं यक्ष्ये भजेय इति ।

( सोऽश्राम्यदि. ) स प्रजापतिः अश्राम्यत् यज्ञसामग्रीसम्पादनाय प्रयत्नं कृतवान्, परन्तु सामग्र्यसम्पत्त्या श्रान्त इव श्रान्तोऽभवत् यथा लोके प्रयत्नं कुर्वाणः श्राम्यति तद्वदयमपि श्रान्तियुक्त इवाभवदित्यर्थः । तदनन्तरं सफलताप्राप्तये स प्रजापतिः परमात्मानमुद्दिश्य तपःकृच्छ्रचान्द्रा-यणादिकं तपश्चकार । ततस्तस्य प्रजापतेः श्रान्तस्य श्रमोयुक्तस्य तप्तस्य तपसा युतस्य च यशोवीर्यमुदक्रामत् यशश्च वीर्यश्च यशोवर्यम् । यशोवीर्य-शब्दयोरर्थम् स्वयमेव श्रुतिर्दर्शयति ।

( प्राणा वै इत्यादि ) प्राणा वै यशोवीर्यम् यशसो वीर्यस्य प्राणा-धीनत्वात् प्राणा एव यशो वीर्यमिति । एवं च यशोवीर्यमुदक्रामदित्य-स्यायमर्थः प्राणास्तत्शरीरादुत्क्रामन् । न ह्युत्क्रान्तप्राणो यशस्वी बलवान् वा भवति ।

( तत्प्राणेषूत्क्रान्तेषु इत्यादि ) प्रजापतिशरीरात् उत्क्रान्तेषु गतेषु प्राणेषु प्रजापतेः शरीरं श्वयितुम् उच्छूनभावं गन्तुम् अध्रियत आरब्धम् ।

## श्व यतुमश्वियत तस्य शरीर एव मन आसीत् ॥ ६ ॥

## सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम् ।

( तस्येत्यादि ) तस्य शरीराद् बहिर्गतस्यापि प्रजापतेर्मनस्तस्मिन्नेव शरीरे आसीत् बभूव । अस्माभिरेतत्स्थूलं शरीरं परित्यक्तम् तदिदं शरीरं हेयमभूदित्यादि शरीरसम्बन्धिनी चिन्ता तस्याभूदित्यर्थः ॥ ६ ॥

तत् शरीरचिन्तायुक्तः किमकरोत्प्रजापतिस्तत्राह—

( सोऽकामयत ) सः पूर्वोक्तचिन्ताविशिष्टः प्रजापतिरकामयत । इच्छां विचारं कृतवानिति । किमाकारकं विचारं कृतवान् तत्राह –

( मेध्यं मे इत्यादि ) स प्रजापतिः शरीरान् बहिर्गतोऽपि सामर्थ्यविशेषात् मे ममेदमुच्छूनतां गतं शरीरं मेध्यं पवित्रं यज्ञार्हम् स्याद्भवेत् । तथाऽनेन शरीरेणाहं पुनरपि आत्मन्वी आत्मवान् शरीरी स्यां भवेयमिति संकल्प्य पुनरपि प्राणसहितः सन् प्रजापतिस्तस्मिन् शरीरे प्रविवेश ।

( ततोऽश्व इत्यादि ) ततः प्रजापतिना पुनरनुप्रविष्टात् स्थूलशरीरात् कारणभूताद् अश्वः समभवत् अश्वरूपो भूत्वा प्रजापतिरुत्पन्नो जात इत्यर्थः ।

( यदश्वदित्यादि ) यत् यस्मात् कारणात् इदं शरीरं मद्गते गतयशोवीर्यम् सत् अश्वयत् उच्छूनतां गतं तत्तस्मात् गतयशोवीर्यत्वादमेध्यं गतम् पुनरपि मत्प्रवेशात् मेध्यं पवित्रं यज्ञार्हमभूत् । तत् तस्मात् एवाश्वमेधस्य यज्ञस्य अश्वमेधत्वम् अश्वमेधनामलाभो जातः । अश्वयदित्यश्वः मेधार्हत्वान्मेध्यः यद्यपि अश्वमेधशब्दो यागवाचकस्तथापि यागद्रव्ययोरभेदोपचारात्तथोक्तिरिति ।

**एष ह वा अश्वमेधं वेद य एनमेवं वेद । तमनवरुद्ध्यै-वामन्यत तं संवत्सरस्य परस्तादात्मन आलभत । पशून्देव-ताभ्यः प्रत्यौहत् तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त।**

( एष ह वेत्यादि ) यः कश्चिदुपासक एतं पशुमश्वम् एवं यथोक्त-निर्वचनं वेद विजानाति । एष ह वा स एवोपासकोऽश्वमेधमश्वप्रधानकं यज्ञं वेद विजानाति । स एवाश्वमेधवेत्ता भवति तदन्योनाश्व मेधमश्व-प्रधानकं यज्ञं वेद विजानाति, स एवाश्वमेधवेत्ता भवति, तदन्यो नाश्व-मेधमश्वप्रधानकं विजानाति, स अश्वमेधवेत्ता भवति तदन्यो नाश्वमेधस्य वेत्ता भवतीति भावः ।

( तमनवरुध्यैवेत्यादि ) प्रजापतिः पुनरपि महता यज्ञेन यजेय-मिति स्वकीयसंकल्पानुसारेण स्वदेहमेवाश्वं कल्पयित्वा तमश्वमनरुध्यैवा-वरोधमकृत्वा मुक्तप्रग्रहमुत्सृष्टबन्धनममन्यताचिन्तयत् मुक्तबन्धनम् कृत्वा-ऽनेन परमात्मानं यक्ष्ये एवं विचारयामासेत्यर्थः ।

( त संवत्सरेत्यादि ) तं मुक्त प्रग्रहमश्वं स प्रजापतिः सम्वत्सरस्य द्वादश त्रयोदश वा मासपरिमितकालस्य परस्तादनन्तरमात्मने आत्मार्थम् स्वान्तःस्थपरमेश्वरार्थमित्यर्थः । आलभतालम्भनं कृतवानिति । तथा अश्वातिरिक्तान् पशून् ग्राम्यनारण्यकांश्च देवताभ्य इन्द्रकुवेरादिभ्यः प्रत्यौहत् ।

प्रविभज्य आलभत तदालम्भनं कृतवानिति ।

(तस्मादित्यादि) यस्मात् कारणात् प्रजापतिरात्मार्थं प्रजापतिदेव-ताकत्वेनालभत, देवताभ्यो ग्राम्यादिकान् पशूनालभत तस्मादेव कारणात् एतत्कालिका अपि यजमानाः सर्वदेवतासमष्टिलक्षणप्रजापतिरूपपरमेश्वर-देवताकत्वेन सार्वदैवत्यं सर्वदेवताकं प्रोक्षितं प्रोक्षणपर्यग्निकरणादि-

**एष वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मा-ऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ ।**

संस्कृत प्राजापत्यं जापतिदेवताकमश्वम् आलभन्ते आलम्भनं कुर्वन्ति । प्रजापतिवदेव तेऽपि तथैव कुर्वन्ति "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति स्मृतेः ।

(एष ह वेत्यादि य एष सर्वलोकप्रत्यक्षविषयीभूतः सूर्यस्तपति सर्वं जगदवभासयति । एष एवाश्वमेधः जगदवभासकस्यादित्यस्य दृष्टिः प्रकृताश्वमेधे करणीयेत्यर्थः । आदित्यदृष्टिरश्वमेधे कर्त्तव्येति कथितं तत्र युक्तिं दर्शयति ।

( तस्य सम्वत्सर आत्मेति ) तस्याश्वमेधपदबोध्यस्याश्वस्य संवत्सर आत्मा । अश्वस्य मेध्यस्येत्यादिना पूर्वप्रकरणे संवत्सररूपत्वमश्वस्य सिद्धं भवति । द्वादशमासात्मककालचक्रस्य प्रवर्तनात् आदित्यस्य संवत्सररूपत्वात् सवत्सरलक्षणेऽश्वे संवत्सरलक्षणस्यादित्यस्याध्यास समुपपद्यते इति ।

(अयमग्निरर्क इति, यः खल्वयमग्निः चित्योग्निर्यज्ञांगभूतः स अर्कः सूर्यः अर्कपदबोध्यः परमात्मैव । कथमेवं तत्र कारणमाह—

(तस्येमे लोका इत्यादि) तस्य चित्यस्य कर्माङ्गभूतस्याग्नेर्यत्र परमात्मदृष्टिरापादिता तस्याग्नेरिमे भूरादयो लोका आत्मानः शरीररूपाः द्यौः पृष्ठमन्तरिक्षमुदरमित्यादि प्रकरणेन चित्यस्याग्नेः सर्वलोकशरीरकत्वस्य कथितत्वात् द्युप्रभृतिलोकशरीरके तस्मिन् चित्याग्नौ प्रतीकभूते परमात्माध्यासस्तथा "सम्वत्सर आत्मा" इति कथनात् तस्मिन् अश्वमेधे संवत्सरलक्षणादित्यस्याध्यासः सम्भवत्येवेति ।

( तावेतावर्काश्वमेधौ इति) तौ एतौ अर्काश्वमेधौ अर्कश्चित्याग्निः । अयमग्निरर्क इत्याद्यनुपदं प्रतिपादनादर्कपदबोध्यश्चित्याग्निरेवार्कशब्देन प्रतिपाद्यते । ततश्चैतौ चित्याग्न्यश्वमेधावुभावपि प्रागुक्तविशिष्टमहिमशालिनौ भवतः ।

**सा पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युञ्जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवति एतासां देवतानामेको भवति ॥ ७ ॥**

**इति बृहदारण्यकोपनिषदि प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ।**

सा पुनरेकैव उपास्य देवता भवति, एकरूपैव भवति । अग्न्यश्वमेधाभ्यां यथोक्तगुणविशिष्टाभ्यां प्रीणनीया देवता एकैव भवति येयमेकैव देवता सा किमग्निरूपा अश्वमेधरूपा तदन्या वा काचिदिति जिज्ञासायामाह—

( मृत्युरेवेति ) मृत्युरेव परमात्मैव । अथवा एतावग्न्यश्वमेधौ प्रलय-काले मृत्युपदबोध्यपरमात्मरूपावेव भवतः पूर्वमपि उत्पत्तेः पूर्वमपि मृत्युपदबोध्यः परमात्मा एकैवासीत् मृत्युनेदमावृतमासीदिति कथनात् । मध्ये स एव क्रियाकारकफलभेदायानेकरूपा जाता स त्रेधेति कथनात् सैव देवता पुनः क्रियादिनिवृत्त्यनन्तर मृत्युलक्षणपरमात्मरूपा एकैव भवतीति भावः । एतादृशाश्वमेधोपासकस्य कीदृशं फलं भवतीत्यत्राह—

( अपपुनर्मृत्युमित्यादि ) य उपासकोऽश्वमेधं यथोक्तप्रकारेणोपास्ते एतादृशाश्वमेधस्योपासनां करोति स पुनर्मृत्युं जयति एकवारं मृत्वा पुनर्मृत्युवशं नायाति । कदाचिदपजितोऽपि मृत्युरेनं ग्रसेत् तत्राह—

( नैनमित्यादि ) एवमेवोपासकं पुरुषं मृत्युर्नाप्नोति स्ववशे नानयति, जन्ममरणरहितः संसारातीतो भवतीति । ननु संसारनिवृत्तिर्ब्रह्मज्ञानमात्रेणैव भवति "तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय" "एवं विद्वान्नामरूपाद्विमुक्तः" इत्यादि श्रुतेः ? तत्कथमेतादृशाश्वमेधोपासनात् उपासकानां संसारनिवृत्तिः स्यादित्याशंकायामाह—

( मृत्युरस्येत्यादि ) अस्याश्वमेधस्यानुष्ठातुरुपासकस्य पुरुषस्य मृत्युर्मृत्युपदबोध्यः परमात्मा आत्मा भवति आत्मरूपेणावगतो भवति । एवं चाग्न्यश्वमेधयोः परमेश्वरात्मकतयाऽवगमात् तद्द्वारा संसारनिवृत्ति-

# अथ प्रथमाध्याये तृतीयं ब्राह्मणम्

**द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव**

कारणत्वं भवति । अयमाशयः यदोपासकस्य मृत्युः स्वीयतां लभते तदा कथमिव कदाचिदपि तस्य विनाशः स्यात्, न हि कश्चित्स्वस्यात्मा स्वस्वरूपं हिनस्ति । यद्वा यदा अश्वमेधानुष्ठाता मृत्युपदबोध्यपरमात्मलक्षणो भवति तदवगतिमान् भवति तदा परमात्मज्ञानमुपासकस्याभूदेवेति परमात्मज्ञानादेवानायासेनैव तस्य संसारनिवृत्तिर्भवति ।

( एतासां देवतानामेको भवति इति) किं चाग्निशक्रादि- सायुज्यकामस्योपासकस्य तदपि भवति एतासामिन्द्रादिदेवतानामेको भवति तत्सायुज्यं प्राप्तो भवति अश्वमेधानुष्ठानकर्तेति ।।७।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये प्रथमाध्यायस्य

द्वितीयं ब्राह्मणम् ।

अथानन्तरं पूर्वप्रकरणद्वयेन समुच्चितज्ञानकर्मणोः फलमृत्वात्मभावः प्रतिपादित इदानीं तयोर्ज्ञानकर्मणोरुत्पत्तिः कथं कस्माच्च भवतीति तदुत्पादकस्योपास्यस्य प्राणाय उत्पत्तिं तथा कर्माङ्गभूते उग्दातरि प्राणदृष्टिं विधातुमिमामाख्यायिकां दर्शयति—

(द्वया ह वै इत्यादिना ) द्वया हेत्यत्र ह शब्दः पूर्ववृत्तस्यार्थस्य स्मारकः । प्राजापत्याः प्रजापतेरपत्यलक्षणाः स्वस्वगोलके विद्यमाना वागादयो द्वया द्विप्रकारकाः के ते ? तत्राह—

(देवाश्चासुराश्च) तत्र शास्त्रीयज्ञानकर्मवासनावासिता द्योतनात्मका देवाः तथा प्रत्यक्षादिजनित–दृष्टप्रयोजन–स्वाभाविक–ज्ञानकर्मवासना वासितान्तःकरणा असुराः अथवा स्वेषु असुषु रमणादसुरा यद्वा सुरविरोधिनोऽसुराः । असुरा इत्यत्र समासान्तर्गतनञो विरोधार्थकत्वात् । ततः कनीयसा एव देवा यस्मात् कारणात् वागादीन्द्रियाण-

**देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्द्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥१॥**

**ते ह वाचमूचुस्त्वन्न उद्गायेति तथेति तेभ्यो वागुदगा-**

आसुरी वृत्तिरधिका दृश्यते । ततस्तस्मात्कारणात् देवा कनीयसः, अल्पीयांस एव । असुराश्च ज्यायसोऽत्यधिकाः शास्त्रप्रवृत्तेर्यत्नसाध्यत्वे-नाल्पत्वं शास्त्रानधीनस्वाभाविकप्रवृत्तेराधिक्यात् । ते देवा असुराश्च एषु लोकेषु ब्रह्मादिस्थावरान्तचेतनाचेतनलक्षणेषु अस्पर्धन्त स्पर्धां विवादं कृतवन्तः परस्परविजिगीषां सम्पादयामासुः ।

(ते ह देवा ऊचुरिति ते देवा वागादयोऽसुरैः पराभूयमाना परस्पर-मूचुरुक्तवन्तः, किमूचुस्ते तत्राह–

( हन्तेत्यादि हन्तास्मिन् यज्ञे ज्योतिष्टोमनामके उद्गीथकर्मकर्तृ-प्राणस्वरूपाश्रयणेनासुरान् तामसादिवृत्तिं पराभूय स्वकीयं देवत्वं द्योत-नात्मकं रूपं अत्ययामेति गच्छाम इत्युक्तवन्तः । परस्परविजिगीषां सम्पादयामासु । तत्रोद्गीथकर्मकर्तृस्वरूपाश्रयणं ज्ञानकर्मद्वारा भवति तत्र कर्म तदेतानि जपेदित्यादिना विधास्यमानमंत्रजपलक्षणम् । ज्ञानं तु आख्यायिकया परीक्ष्यमाणमशुद्धवागादिनिराकरणेन विशुद्धप्राणोपासन-लक्षणमेवेति । हन्तेतिपदम् असुरविजयोपायदर्शनजनितानन्दपरकम् । तथोद्गीथशब्द उदातृपरकः । यतोऽग्रे उद्गातुर्देवाध्यस्तप्राणादिभावस्यो-पास्यत्वप्रतिपादनार्थमिति ॥ १ ॥

( ते ह वाचमूचुरित्यादि) ते ह देवा उक्तप्रकारेण निश्चयं कृत्वा वाचं वागाभिमानिनीमग्निलक्षणामेवोद्गानकर्मकर्त्रीमसतो मा सद्गमये-त्यादिमंत्रप्रकाश्यां च देवतां मत्वा त्वं नोऽस्मभ्यम् उद्गायेति औद्गात्र कर्म कुरु इत्येवं क्रमेण प्रार्थनां कृतवन्तः । एवमुक्तक्रमेण देवैरुद्गात्रकर्मणि नियुज्यमाना वाग्देवता ।

यत् । यो वाचि भोगस्तं देवेभ्य आगायत् यत् कल्याणं वदति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥

अथ ह प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्यः प्राण

(तथेति) तथाऽस्तु इति नियोक्तृन् प्रति कथयित्वा स्वकीयं सामर्थ्यमविचार्यैवोद्गानकर्तृत्वं मन्त्रप्रकाश्यत्वञ्च स्वस्य स्वीकृत्य तेभ्योऽर्थिभ्यो देवेभ्य उदगायत् उद्गानं कृतवती वाग्देवता ।

( यो वाचि भोग इत्यादि) वाचि निमित्तभूतायां यो भोगो गानादिजन्यः सुखविशेषानुभवस्तं भोगमर्थिभ्यो देवेभ्योऽर्थिभ्य आगायत् उद्गानेन समर्पितवती । यत्पुनः कल्याणं शोभनं वदति यथाशास्त्रं वर्णानामकारादीनामभिनिर्वर्तनं करोति वाक् तदात्मने तत् स्वात्मार्थमेव करोति । यत् सम्यग् वर्णोच्चारणं तत् वाग्देवताया असाधारणं कर्मेति एवं क्रमेण वाग्देवताकर्तृकमुद्गानं दृष्ट्वा ते असुरा एवं विदुर्ज्ञातवन्तो यत् इमे देवा वाग्देवता–द्वारा । अनेन वै उद्गात्रा शास्त्रजनितकर्मज्ञानरूपेण नोऽस्मान् अत्येष्यन्ति जेष्यन्ति इति विचार्य तमुद्गातार वाग्लक्षणम् अभिद्रुत्य शीघ्रं प्राप्य पाप्मनाविध्यन् पापेन तां वाचं संयोजितवन्तः ।

( यः स पाप्मेत्यादि) यः स पाप्मा तदेव मिथ्यावलगनादिकारणभूतः ।

( यदेवेदमप्रतिरूपम्) शास्त्र प्रतिषिद्धमनुचितमश्लीलानृतपैशुन्यादिकं वदति स एव पाप्मा तेन पाप्मना असुरैर्वाग्देवता ताडिता तेऽसुराः कामक्रोधलोभादिसमुत्पादनद्वारा वागिन्द्रियं परुषातिवादपैशुन्यादिद्वारा दूषितं कृतवन्त इति ॥२॥

( अथ ह प्राणमूचुरित्यादि ) अथ यदा वाग्देवता असुरैः पराभूता

उद्गायद्यः प्राणे भोगस्तन्देवेभ्य आगायत् यत् कल्याण-ञ्जिघ्रति तदात्मने। ते विदुरनेन वै न ऊद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रति-रूपञ्जिघ्रति स एव स पाप्मा ॥ ३ ॥

अथ ह चक्षुरूचुस्त्वन्न उद्गायेति तथेति तेभ्यश्चक्षुरु-द्गायत्। यच्चक्षुषि भोगस्तन्देवेभ्य आगायद्यत्कल्याणम्प-श्यति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रति-रूपम्पश्यति एव स पाप्मा ॥४॥

अथ ह श्रोत्रमूचुस्त्वन्न उद्गायेति तथेति तेभ्यः श्रोत्र-मुद्गायद् यः श्रोत्रे भोगस्तन्देवेभ्य आगायद्यत्कल्याणं शृणोति तदात्मेने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं शृणोति स एव स पाप्मा ॥५॥

अथ ह मन ऊचुस्त्वन्न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तन्देवेभ्य आगायद्यत् कल्याणं सङ्क-

अनृतवदनादौ प्रवृत्ता तदा देवानां पराजयो जातोऽसुराणां विज इति मत्वा ते देवाः असुरान्पराभवितुम् प्राणं घ्राणमूचुरुक्तवन्तः त्वं नोऽस्माकं कृते उद्गाय उद्गानं कुरु।

(तथेति) ततो घ्राणदेवतां देवा उद्गानाय प्रेरितवन्तः, ततो घ्राण-देवतोद्गानं कृतवती। तथोद्गानं क्रियमाणं घ्राणं दृष्ट्वानेनोद्गात्राऽस्मात् विनाशयिष्यन्ति देवा इति ज्ञात्वा तेऽसुरा घ्राणं पाप्मनाऽविध्यन् तैरुपहृतं

ल्पयति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं सङ्कल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥६॥

अथ हेममासन्यम्प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्य-

घ्राणमिन्द्रियमशोभनमपि गन्धं जिघ्रति स एवायं पाप्मोत्पादिका मंत्राः पूर्ववदेव व्याख्यातव्याः। अथ ह प्राणमूचुस्त्वं नेत्यादिना प्रतिपादितानेवार्थान् पुनरपिदर्शयितुं निगमयति।

(एवमु खल्वेता देवता इत्यादि) एवमु खलु एवमेव खलु रीत्या एता वागादयो देवताः सर्वा अपि असुरैः पाप्मभिरनृतवदनपैशून्यादिलक्षणैरुपासृजन् उपगतवन्तः असुरैर्विध्यमानाः स्वकार्येऽसमर्था विपरीतकार्यमेवकुर्वन्त्यो देवानां कार्ये असफला एवाभवन्निति। एवमेता एवं पूर्वोक्तरीत्यैव। एता वागादिदेवताः पाप्मनाऽविध्यन्। अनृतवदनादिलक्षणपाप्मना असुरा वेधनं कृतवन्त इति ॥ ३–६ ॥

एते वागादयो देवा असुराणां पराजयकरणेऽसमर्था इति निश्चयं कृत्वाऽसुरविजयाय मुख्यं प्राणं प्रार्थयामासुरिति दर्शयितुमाह—

( अथ हेममासन्यमित्यादि ) अथ वागादिदेवतानां नैराश्यानन्तरम् आसन्यम् मुख्यम् यद्वा आस्ये मुखे भवम् मुखान्तर्विले विद्यमानं प्राणं ते देवा ऊचुरुक्तवन्तः हे मुख्य प्राण ! त्वं नो अस्माकं कृते उद्गायोद्गानं कुरु ततस्तथेति मुख्यप्राणः स्वीकृत्य देवेभ्यो देवप्रयोजनायोदगायदुद्गानं कृतवान् उद्गातरि मुख्यप्राणदृष्टिं कृतवानिति। तदनन्तरं तेऽसुरा एवं विदुरेवं ज्ञातवन्तो यदिमे देवा अनेनोद्गात्रा प्राणेनास्मान् अत्येष्यन्ति

न्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यथा श्मानमृत्वा लोष्टो विध्वंसेतैवं हैव विध्वंसमाना विश्वञ्चो विनेशुस्ततो देवा अभवन् पराऽसुरा भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद ॥७॥

ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्त-

जेष्यन्तीति पूर्वाभ्यासात् तं प्राणमभिद्रुत्य पाप्मना अविध्यत्सन् वेद्धुमैच्छन् । ततः परम् —

( यथा श्मानमित्यादि ) यथा लोके पाषाणं चूर्णीकर्तुं प्रक्षिप्यमाणो लोष्टो मृत्तिकाखण्डः अश्मानं प्रस्तरखण्डं ऋत्वा प्राप्य विध्वंसेत स्वयमेव चूर्णीभवेत् न तु प्रस्तरखण्ड ध्वस्तं भवति तथैवेतेऽसुराः प्राणान्नाशयितुं प्रवृत्ता अपि प्राणं प्राप्य विध्वंसमानाश्चूर्णीभवन्तो विश्वञ्चो नानागतयो विनष्टाः सञ्जाताः ।

( ततो देवा इत्यादि ) ततस्तदनन्तरं पाप्मप्रयोजकासुराणां विनाशानन्तरम् देवा वागादयो देवा द्योतमाना अभवन् अथवा देवा देवा अभवन स्वकीयां सत्तामलभन्त विजयिनोऽभवन्नित्यर्थः । तथा असुराः कृतसंग्रामा अपि संग्रामे देवैः पराऽभवन् पराभूताः सञ्जाता ।

( भ्रातृव्यो भवतीत्यादि ) य उपासक एवं यथोक्तगुणसम्पन्नं प्राणं वेद विजानाति प्राणोपासनं करोति तस्य यो भ्रातृव्यो नित्यद्वेषकर्त्ता शत्रुः स परामवति यथाऽश्मानं प्राप्य लोष्टखण्डस्य विनाशो भवति, तथा प्राणोपासकस्य शत्रुरपि विनष्टो भवतीति भावः । अथवा प्राणोपासकस्य द्विषन्भ्रातृव्यः शत्रुः आत्मना स्वत एव पराभूतो भवति पाप्मा च भवति, निन्दादियुक्तश्च भवतीति ॥ ७ ॥

(ते होचुरित्यादि) ते देवा वागादय ऊचुरुक्तवन्तः यो मुख्यप्राणो नोऽस्माकम् । इत्थं यथोक्तं शत्रुपराजयमशक्ताकुरुत । अस्माकं शत्रोः

**रिति सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः ॥८॥**

**सा वा एषा देवता दूर्नाम दूरं ह्यस्यामृत्युर्दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥९॥**

पराजयं कृतवान् स मुख्य प्राणः क्व नु कस्मिन् स्थानेऽभूत् ? कुत्र प्रतिष्ठितः? इत्येवं क्रमेण मन्त्रणां परस्परं कृतवन्तः। एवं मन्त्रणाकरणानन्तर ते दृष्टवन्त :—

(अयमास्येऽन्तरित्यादि) अयं मुख्यप्राणो योस्माकं शत्रूणां विजेता स आस्येन्तः मुखाभ्यन्तरे एव स तिष्ठतीति प्रत्यक्षदृष्टः प्राणोऽयास्यः मुखाभ्यन्तरे विद्यमानत्वादयास्य इति, हि यस्मात् कारणादयं मुख्यप्राणोऽङ्गानां रसः सारभूतस्तस्मादयमाङ्गिरसः, यद्वा यतोऽयमाङ्गिरसस्तस्मादङ्गानां रस इव रसः सारभूतः ॥ ८ ॥

(सा वा एषा देवतेत्यादि) हि यस्मात्कारणात् अस्या मुख्यप्राणरूपाया देवताया दूरं भवति मृत्युः। सा वा एषा देवता दुर्नाम। तस्मात्कारणात् मुख्यप्राणलक्षणदेवताया दुरिति नाम भवति तस्मात् प्राणस्य दुर्नामत्वम्। दुर्नामकत्वेनोपासितायाः प्राणदेवतायाः उपासकस्य कीदृशं फलं भवति तत्राह–

(दूरं ह वेत्यादि) सा वा एषा देवतायां प्राणाख्यदेवतां प्राप्य तामसवृत्तिरूपा असुराः देवैर्मुख्यान्तरिति निश्चिता सा वा एषा प्राणरूपैव देवता दूर्नाम। हि यस्मात्कारणात् अस्याः प्राणदेवतायाः सकाशात् मृत्युः पाप्मा दूरं दूरे भवति। तस्मात् कारणात् यः प्राणोपासकः एव विशुद्धयादिगुणकं प्राणं वेद प्राणदेवताया उपासनं करोति। अस्मात् उपासकात् मृत्युर्दूरं दूरे भवति पापात्मकमृत्युसम्बन्ध उपासकस्य न भवतीति ॥९॥

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयाञ्चकार तदासां पाप्मनो विन्यदधा-त्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववाया-नीति ॥ १० ॥**

एतदेव स्पष्टयति ( सा वा एषेत्यादि) सा वा एषा देवता प्राणाख्या या हि आसां वागादिदेवतानाम् मृत्युं मरणादिदुःखकारणतया मृत्युपद-बोध्यं पाप्मानम् । अपहत्य वागादिदेवताभ्यो दूरीकृत्याच्छिद्येत्यर्थः। यत्रासां प्राच्यादिदिशामन्तःपर्यन्तप्रदेशस्तद्गमयां चकार ।

( तदासां पाप्मनो विन्यदधात् ) आसां वागादीदेवतानां पाप्मनः पापानि विन्यदधात दिशामन्ते स्थिते जने वा विशेषेण निधानं कृतवती यावता मृत्युर्वागादिदेवानां समीपे ना गच्छेत् इति कृत्वाऽतिदूरे मृत्योर्निक्षे-पणं कृतवती प्राणदेवतेति ।

( तस्मान्न जनमियादित्यादि) यस्मात्कारणात् दिशामन्तस्थेऽन्त्यजने आसां वागादिदेवतानां पाप्मनो विन्यदधात् तस्मात्कारणात् जनमन्त्यं जनम् न इयात् तैः सह सम्भाषणादिकं न कुर्यात्, तथा अन्तं तज्जन-निवासस्थानं नेयात् न गच्छेत् । यस्मात्कारणात् प्रत्यन्तदेशानां वागादिदेवताविनिर्मुक्तानृतादिरूपपापनिधानाश्रयतया तद्देशस्य पाप-बहुलत्वात् म्लेच्छदेशत्वम् । अत एव तत्र देशे जनं जननमुत्पत्तिं नेयात् तथा तत्र देशे अन्तं मरणञ्च नेयात् न प्राप्नुयात । तत्र मरणं जननं वा अशोभनमिति भावः ।

(नेत्पाप्मानमित्यादि अत्र नेदिति परमयार्थको निपातः नेत् नैव (पाप्मानं मृत्युमन्ववायानीति) यद्यहं तादृशं जनान्तिकं पापाधिकरणं देशं प्रतिगमिष्यामि तदा निषेधातिलंघनात् पापलक्षणं मृत्युं प्राप्स्या-मीति भयेन शिष्टमात्रो न गच्छेदिति भावः ॥ १० ॥

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्या-थैना मृत्युमत्यवहत् ॥ ११ ॥**

**स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२**

**अथ ह प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायु-**

सम्प्रति संगृहीतं देवताभावाफलमेव स्पष्टयति—

( सा वा एषा देवतेत्यादि ) एषा सा मुख्यप्राणदेवता एतासां वागादिदेवतानां पाप्मलक्षणं मृत्युं ततो देवताभ्य अपहत्याच्छिद्याथ तदनन्तरम् । एना एषा वागादिदेवता मृत्युं पापलक्षणम् अत्यवहत् मृत्व्यतिक्रान्तं स्वकीयं रूपं प्रापितवती ॥ ११ ॥

एवं सामान्यरूपेण कथितमेव बहुलं विशेषरूपेण दर्शयितुमाह—

( स वै वाचमेव प्रथमामित्यादि ) स वै स मुख्यः प्राणः वाचं वाग्देवतां प्रथमामितरापेक्षया प्रधानामुद्गानकर्तुरत्यन्तसमीपस्थत्वात् । अत्यवहत् मृत्युमत्यक्रामयत् ।

( सा यदेत्यादि ) सा वाग्देवता यदा मृत्युमत्यमुच्यतात्यतं मुक्ता पापलक्षणात् अभवत् तदा वागेव स प्रसिद्धोऽग्निरभवत् । पूर्वमपि वाग्देवताग्निस्वरूपैवासीत् अत्र सोग्निरभवदित्यत्र स इति पुल्लिंगनिर्देशो न वागपेक्षया किन्तु अग्नपेक्षयैव । ननु यदि पूर्वमपि अग्निदेवतारूपैव वागासीत् इदानीमपि तद्रूपैव तदापूर्वापरावस्थयोः को भेदस्तत्राह—

( सोयमग्निरित्यादि । सोयमग्निरतिक्रान्तो निर्गतपापः परेण मृत्युं मृत्योः परस्तात् दीप्यते पूर्वन्तु वागध्यात्मप्रतिबद्धो नेदानीमिव दीप्तिमानभवत् । अयमेव पूर्वापरावस्थयोर्विशेष इति ॥ १२ ॥

( अथ प्राणमित्यादि ) अथानन्तरम् स मुख्यःप्राणः प्राणं नासिकाभ्यन्तरसंचारिणं घ्राणमत्यवहत् मृत्युमत्यक्रामयत् स प्राणो घ्राणो यदा-

स एवमसौ वायुः परेण मृत्युमतिक्रान्तः पवते ॥१३॥

अथ चक्षुरत्यवहत् तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥१४॥

अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥१५॥

अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्य स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येव ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥१६॥

यस्मिन्काले मृत्युमत्यमुच्यत मृत्युमतीत्यातिमोचिता तदा तस्मिन्काले स्वयं स प्राणो वायुरभवत् पूर्वमपि वायुदेवः सन् । सोयमतिक्रान्तः पापान्निर्गतो वायुः परेण मृत्युं मृत्योः परस्तात्पवते वाति विलक्षणगतिमानभवदिति ॥१३

( अथ चक्षुरित्यादि ) अथानन्तरं मुख्यप्राणः चक्षुरत्यवहत् मृत्युमतिक्रामयत् स यदा मृत्युमत्यमुच्यत । तदा आदित्योऽभवत् सोयमादित्यो मृत्योरतिक्रमणानन्तरं तपति प्रकाशमानोभवदित्यादि श्रोत्रप्रकरणं यावत् समानरूपेणैव व्याख्येयम् ॥ १४–१५ ॥

अथ वागादिदेवतानामग्न्यादिदेवताप्राप्तावपि तदुपासकस्य कीदृशं फलं भवतीति जिज्ञासायामाह—

(अथ मनोऽत्यवहदित्यादि) मनोऽत्यवहदित्यादिकं पूर्ववदेव व्याख्येयम् य उपासक एवं वागाद्यभिमान्यग्न्यादिदेवतानामत्यवहनक्रमं वेद विजानाति तमेनमुपासकम् एषा मुख्यप्राणदेवता मृत्युमतिवहति मृत्युमतिक्रामयतीति ॥ १६ ॥

**अथात्मनेऽन्नाद्यमागायद्यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥१७॥**

**ते देवा अब्रुवन्नेतावद्वा इदं सर्वं यदन्नं तदात्मने**

पुनरपि मुख्यप्राणस्य गुणान्तरं दर्शयितुमाह—

( अथात्मने इत्यादि ) अथात्मनोऽन्नाद्यमागायत् । यो वाचि भोगस्तं देवेभ्य आगायत् यत्कल्याणं वदति तदात्मने इत्यादि यजमानफलातिरिक्तं कल्याणवदनादिकं वागादिभिर्यथा आत्मार्थमागानं कृतम् तद्वत् मुख्यप्राण-आत्मने स्वात्मार्थम् अन्नाद्यम् अन्नं च तदाद्यं चेत्यन्नाद्यम् । यद्वा अन्न-मत्तीति अन्नादः तस्य भावो अन्नाद्यम् अदनार्हं भक्षणयोग्यम् आगायत् गानसामर्थ्येन सम्पादितवान् ।

( यद्धि किञ्चान्नमित्यादि ) हि यस्मात्कारणात् यत्किञ्च यत्किञ्चिद-प्यन्नं प्राणिभिरद्यते भुज्यते तत्सर्वमदनीयम् अनेन मुख्यप्राणेनैवाद्यतेऽप-भुज्यते तस्मात्कारणात् प्राणस्य स्वार्थमपि उद्गानं घटते एवेति । इहाद्य-मानेस्मिन् अन्ने सत्येव प्राणः प्रतितिष्ठति प्रतिष्ठो भवति । अतोऽन्नं प्राणस्याहाररूपमिति प्राणस्यान्नाद्यत्वमपि लोकसिद्धं सिद्धम्भवतीति ।१७।

मुख्यप्राणद्वारेणैव वागादीनामप्यन्नादुपकारो भवतीति दर्शयितुमाह—

( ते देवाः प्राणमब्रुवन्निति ) ते वागादिका देवाः सर्वान्नभोक्तारं प्राणमब्रुवन् उक्तवन्तः ।

( एतावद्वेत्यादि ) इदं परिदृश्यमानं वैशब्दः प्रसिद्धार्थकः यदन्नं प्राणस्थितिकारणमस्ति तत् एतावदेव नातोऽधिकमस्ति । एतत्सर्वमन्न-मात्मने स्वार्थमेवागासीः उद्गानकरणेन सर्वमेवान्नं त्वमात्मसात्कृतवानसि। एते वयं वागादिका देवा अपि अन्नमन्तरेण स्वरूपस्थितावसमर्था एवेत्य-तोऽनु तद्भोगानन्तरं नोऽस्मानपि अन्ने स्वात्मार्थं परिकल्पि तेऽन्ने —

**आसीत्तु नोऽस्मिन्नन्न आभजस्वेति ते वै माभिसंविशतेति तथेति तं समन्तं परिण्यविशन्त तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवं ह वा एनं स्वा अभिसंविशन्ति भर्ता**

( आभजस्व ) आभजयस्व अत्र आशब्द ईषदर्थेऽतोऽल्पभागवतोऽस्मान् कुरु । हे प्राण येन भक्षितेनान्नेन निर्वाहो भविष्यति तत्सर्वमेवान्नं त्वमेवात्मसात् कृतवानसि । अस्य तेऽवशिष्टं नापरमवशिष्यते । अतः कृपया त्वमेव स्वभागादेवाल्पीयाँसमंशमादायाल्पभागभाजोऽस्मान् कुरु यतो वयमपि भवत एवाश्रिता भवन्तमाश्रित्यैवास्माकमपि निर्वाहो भविष्यतीति प्रकरणार्थः । एवमुक्तः प्राणो वागादीन् प्रत्याह—

( ते वै इत्यादि ) ते वै तादृशा अन्नप्रयोजना भवन्तो वागादयो यूयं मा मां प्राणम् ।

( अभिसंविशतेति) अभितः समन्तत आभिमुख्येन संविशतोपनिशत । तथेति प्राणस्य कथनानन्तरं वागादयो देवता अन्नार्थिनस्तथेति प्रतिश्रुत्य तं प्राणं राजानमिव समन्तं समन्तात् परितः ण्यविशन्तः प्राणं परिवर्योपविष्टा अभवन् । भागिनश्चाभवन्निति । कारणात् अनेन प्राणेन युक्तो जीवोदृष्टबलाद् यत्किञ्चिदप्यन्नमदनीयमत्ति भक्षयति तेन प्राणान्नेनैव एता वागादयो देवताः तृप्यन्ति तृप्ता भवन्ति । प्राणमुक्तान्नद्वारेण तास्तृप्ता भवन्ति, न तु स्वातन्त्र्येण वागादीनामन्नसम्बन्धोऽपि तु प्राणद्वारेणैवान्नसंबन्धो भवतीति । एतादृशप्राणोपासकस्य कीदृशं फलं भवतीति जिज्ञासायामाह–

( एवं ह वेत्यादि) य उपासक एवं यथोक्तगुणकं प्राणमुपास्ते यथोक्त प्राणस्योपासनं करोति तमेनमुपासकं स्वाः स्वकीयज्ञातयोऽभिसंविशन्ति परित उपासते । यथा वागादयः प्राणस्य परितो निविष्टास्तथैवोपासकस्यापि परिवारा उपासकं परितो निविशन्ति तथा यथा वागा-

**स्वानां श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवं विदं स्वेषु प्रतिप्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वैतमनुभार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ १८ ॥**

दीनां प्राणेत भर्ता पोषकोस्तथैवो पासकोऽपि स्वानां भर्ता पोषको भवति, तथोपासकः स्वानां श्रेष्ठः पूज्योभवति । पुर एता भवति एवमुपाको ज्ञातीनामन्येषां च पुरो अग्रत एता गन्ता भवति, सर्वस्याग्रेसरो भवतीत्यर्थः । अन्नादो भवति व्याध्यादिरहितो दृढगात्रः सन् अन्नस्य भोक्ता भवति—दीप्ताग्निर्भवतीत्यर्थः । अधिपतिः स तादृशोपासकः स्वानामन्येषाञ्चाधिपतिः परिपालयिता च भवतीति ।

( य उ हैवं विदमित्यादि ) य उ इत्यत्र उ इति निपात आश्चर्यार्थकः हशब्दश्च निश्चयार्थकः । यः कश्चित् एवंविदम् प्राणोपासकं विद्वांसं प्रति स्वेषु स्वकीयज्ञातीनां मध्ये प्रति प्रतिकूलः प्रतिस्पर्धी सन् बुभूषति भवितुमिच्छति, प्रतिस्पर्धितामिच्छति स प्रतिभटोहो यथाप्राणस्पर्धिनोऽसुरा अकिञ्चनाः संवृत्तास्तथैवायमपि भार्येभ्यो भरणीयेभ्यः पुत्रकलत्रादिभ्योऽलं समर्थो न भवति । प्राणवित्प्रतिपक्षिस्वकीयपरिवारस्थान्नादिना पोषणे समर्थो न भवतीत्यर्थः । प्राणविदः शत्रूणां परिवारपोषणेऽसामर्थ्यं दर्शयित्वा प्राणविदनुरक्तानां परिवारभरणादिसामर्थ्यातिशयं दर्शयितुमाह ।

( अथ य ए वैतमित्यादि ) अत्राथशब्दः प्रकृतिमपेक्ष्यार्थान्तरपरकः, अथवा ज्ञातीनां मध्येऽन्यो वा एतं प्राणविदं अनुभवति अनुगतो भवत्यनुसरणं करोतीत्यर्थः । योवाएत प्राणविदमनु अनुसृत्य भार्यान् भरणीयान् पुत्रमित्र कलत्रादीन् बुभूर्षति भर्तुमिच्छति स प्राणविदोऽनुसरणकर्त्ता अलं समर्थः भार्येभ्यो भरणीयेभ्यः पुत्रादिभ्यो भवति पुत्रादीनां भरणपोषणे विशिष्टसामर्थ्य युक्तो भवति तदनुसारणप्रभावादित्यर्थः ।.१८॥

**सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः प्राणो वा अंगानां रसः प्राणो हि वा अंगानां रसस्तस्माद्यस्मात्कस्माच्चांगात्-प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अंगानां रसः॥१९॥**

**एष उ एव बृहस्पतिर्वाग् वै बृहती तस्या एष पतिस्त-स्मादु बृहस्पतिः ॥ २० ॥**

प्राणे पूर्वकथितमेवायास्यत्वमांगिरसत्वञ्च विधान्तरश्रमनिरा-करणाया सत्वादिगुणकं गुणं प्राणस्य दर्शयितुमाह–

(सोऽयास्य इत्यादि) स मुख्यप्राणोऽयास्यः मुखान्तरविलनिष्ठो अङ्गानां रसः सारभूतस्तस्मादेवाङ्गिरस इत्यादिक्रमेण पूर्ववदेवार्थो ज्ञातव्य इति। लोकप्रसिद्ध्यापि पुनराङ्गिरसत्वादिकं प्राणगुणं दर्श-यितुमाह–

(प्राणो हि वेत्यादि) यस्मात्कारणात् मुख्यप्राणोऽङ्गानां रसः सार-भूतस्तस्मात् यस्मात् कस्मात् चिदङ्गात् हस्तात् पादादितो वा प्राणः शरीरस्य सारभूत उत्क्रामति तत्प्रदेशान्निर्गतो भवति तदा तदेवांगं हस्त-पादादि शुष्यति शोषमुपयाति सारहीनत्वात्, हि यतः प्राणो हि अङ्गानां रसः तस्मात् रसाभावात् प्राणविवर्जितमंगं शुष्यत्येवेत्यर्थः ॥१९॥

प्राणस्यैव गुणान्तरकथनद्वारेण प्रकरणान्तरमिवोत्थापयति–

(एष उ ए वेत्यादि) उ शब्दश्चार्थद्योतकः एष एवांगरसत्वेन प्राण एव बृहस्पतिश्च। तत् किं देवगुरुरयं प्राणस्तत्राह–

(वाग्वै इत्यादि) वाग्वै बृहती वाग्वा अनुष्टुबिति श्रुत्यन्तरात् द्वात्रिं-शदक्षरात्मकानुष्टुप् छन्दस्कऋग्लक्षणाया वाचो बृहत्यां षट्त्रिंशदक्षरा-त्मकऋग्लक्षणायामन्तर्भावात् वाग्वै बृहती तथा च बृहत्यात्मकछन्दसो वाग्रूपत्वात् बृहत्यात्मिकायास्तस्या वाच एष प्राणः पतिः रक्षकः प्राण-

**एष उ एव ब्रह्मणस्पतिर्वाग् वै ब्रह्म तस्या एष पतिस्त-स्मादु ब्रह्मणस्पतिः ॥ २१ ॥**

**एष उ एव सामवाग् वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् यद्वेव समः प्लुषिणा समो मशकेन समो नागेन**

सत्ताधीनत्वात् वागादिसत्तायाः' एतस्मादेव कारणात् अयं प्राणो बृहस्पतिरपि भवतीति ॥२०॥

ऋगाद्यात्मत्वं प्राणस्य कथयित्वा यजुर्वेदात्मकत्वं प्रतिपादयितुमाह–

( एष उ एव ब्रह्मण इत्यादि ) एष एव प्राणो ब्रह्मणो वेदस्य यजुर्वेदस्य पति पि । कथमयं प्राणो ब्रह्मणः पतिस्तत्राह–

( वाग्वै इत्यादि ) वाग्वै वाग्विशेषलक्षणं यजुरेव ब्रह्म वेद तस्या वाचोऽयं पतिस्तस्मात्कारणादयं ब्रह्मणः पतिरिति ॥२१॥

( सामवेदात्मकत्व प्राणस्य दर्शयितुमाह–

(एष उ एव सामेत्यादि) एष उ एव वाग्विशिष्टो मुख्यप्राण एव साम, सा चामश्चेति सामशब्दव्युत्पत्तेः । सा इत्यत्र स्त्रीलिंगतच्छब्देन वाचो ग्रहणम् । अम गताविति गमनार्थको अम धातुः ततश्चामति गच्छति इति अमः सर्वत्र संचरणशीलो वायुविशेषः प्राणः तदेव दर्शयति–

( वाग् वै सा अमैष इत्यादि) यद्वेवेत्यत्र यत् उ एवेत्येवं क्रमेण पदच्छेदो ज्ञातव्यः तत्र उशब्दो वार्थकः यस्मादेव वा अय प्राणः प्लुषिणा पुत्तिकाशरीरेण समस्तुल्यः मशकेन मशकादिक्षुद्रजन्तुशरीरेण समस्तुल्य तथा नागेन हस्तिशरीरेण समस्तुल्यः, सम एभिस्त्रिभिर्लोकैः समष्टिजीवभूतत्रैलोक्यशरीरकब्रह्मणः शरीरेण समस्तुल्यः तथाऽनेन देवमनुष्यादिसर्वशरीरेण समस्तुल्यः इति सर्वैः सह समत्वादयं सामपदस्य मुख्योर्थः प्राणः । यथा खलु प्रदीपप्रभा घटमध्ये विद्यमाना घटोदरमात्रं प्रकाशयति, सैव प्रदीपप्रभा प्रासादस्थिता प्रासादं सर्वमेव व्याप्नो-

सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्मादु हैव सामा-
श्नुते साम्नः सायुज्यं सलोकतां जयति य एवमेतत्साम-
वेद ॥ २२ ॥

एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदं सर्व-
मुत्तब्धं वागेव गीथोच्चगीथा चेति स उद्गीथः ॥ २३ ॥

ति तद्वत्प्राणोपि ब्रह्मादिपुत्तिकान्तशरीरेषु विद्यमानस्तत्तच्छरीरानुरूप-व्याप्तिमत्त्वेन समः तस्मादेवायं प्राणः सामेति । इमामेवश्रुतिमुपलभ्य मुख्यप्राणस्य व्यापकत्वमङ्गीकुर्वन्ति बहवः तन्न मनोरमम् । यदि प्राणो व्यापकपरिमाणवान्स्यात् तदा गगनवत् तत्र गमनादिका क्रिया न स्यात् अत इन्द्रियवत् तस्य मुख्यप्राणस्यापि उत्क्रान्त्यादि श्रवणात् तस्याणुत्व-मेवेति । अत एव सूत्रकारेणापि अणवश्चेति सूत्रे प्राणस्याणुत्वं व्यवस्था-पितमिति भावः । एतादृशगुणविशिष्टप्राणोपासकानामुपासनाफल दर्शयति ।

(अश्नुते साम्न इत्यादि) य उपासक एतद्गुणकं प्राणं वेदोपास्ते स प्राणोपासकः साम्नः सामपदबोध्यस्य प्राणस्य सायुज्यं प्राणदेवतासमान-लोकतामश्नुते सलोकतां जयति सालोक्यं प्राप्नोति, यः सामशब्दनिरुक्ति सर्वदानुसंधत्ते इति ॥२२॥

(एष उ वा उद्गीथ इत्यादि) एष प्राणो वा उद्गीथः उद्गीथाख्यः साममभक्तिविशेषः कथं प्राण उद्गीथस्तत्राह—

(उत्प्राणेन हीत्यादि) हि यस्मात्कारणात् प्राणेनेदं शरीरादिकं सर्वमुत्तब्धं विधृतम् तस्मादेव हेतोः प्राण उत् यस्मात् वाण्या गीयते तस्मात् वागेव गीथा—उद्गीथशब्दाभ्यां प्राण एव वाच्यो भवति उत् च गीथा चेति तस्माद्वागुपसर्जनः प्राण एवोद्गीथः ॥२३॥

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं तस्य राजा मूर्द्धानं विपातयताद्यदितो यास्य आंगिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ।२४।

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य

अत्रोद्गीथदेवता प्राण एव न तु वागादिरित्येतद्दर्शयितुमाह—

( तद्धापीत्यादि ) तत्तत्राख्यायिका । ह शब्दः प्रसिद्धार्थकः प्राणस्य मुख्यत्वे आख्यायिकापि लोके प्रसिद्धेति । चैकितायनेयः चिकितस्य गोत्रापत्य चैकितिः तस्यापत्यमुवाचैकितायनं तदपत्यं चैकितायनेयो ब्रह्मदत्तस्तन्नामको ऋषिविशेषो विश्वसृजां ऋषीणां यज्ञे राजानं सोमं भक्षयन् प्रोक्तवान् । किमुक्तवान्तत्राह—

( त्यस्येत्यादि ) अयं भक्ष्यमाणो राजा सोमोऽन्यस्य मूर्धानं मस्तकं शिरो विपातयात् शरीरात्पृथक् शिरः कुर्यात् । अन्यस्य शिरःपातने को हेतुस्तत्राह—

( यदित इत्यादि) यत यस्मात्कारणात् इतोऽस्मात् अयास्यांगिरसो मुख्यप्रणात् अन्येन मुख्यप्राणातिरिक्तेन देवतान्तरेणोद्गानं कृतवान् तस्मात्तस्य देवतान्तरेणोद्गानं कुर्वतः सोमो राजा शिरः पातयतु । अर्थात् अयास्याङ्गिरसपदबोध्यमुख्यप्राणवेदनं विनैव देवतान्तरदृष्टिं कृत्वा य उद्गानं करोति तादृशोद्गानकर्तुः सोमरसपानं कुर्वतो मूर्धा पततु इति भावः । अत्रेतिशब्दो ब्रह्मदत्तऋषेर्वचनसमाप्तिद्योतकः ।

( वाचा चैवेत्यादि ) यस्मात्कारणात् सोमरसपानं कुर्वन् ब्रह्मदत्तः शपथं कृतवान् तस्मादेव कारणात् स ब्रह्मदत्तो वाचा प्राणेन वाक् सहितेनायास्यांगिरसशब्दितमुख्यप्राणेन वाक्सहितमुख्यप्राणवेदनमेवेत्यर्थः कृत्वा उदगायत् वाक्सहितमुख्यप्राणवेदनमेव कृत्वोद्गानं कृतवानित्यर्थः ।।२४।।

( तस्य हैतस्येत्यादि ) तस्य विशुद्धादिगुणवत्त्वेन रूपेण प्रकृतस्य

वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एवाऽथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥ २५ ॥

तस्य हैतस्य साम्नो यः सुवर्णम् वेद भवति हास्य सुव-

हैतस्य बृहस्पत्यादिगुणवत्त्वेन रूपेण लक्षितस्य साम्नः सामपदबोध्यस्य मुख्यप्राणस्य स्वं धनं य उपासको वेद। अस्य विजानत उपासकस्य स्वं धनं भवति, धनयुक्त उपासको भवतीत्यर्थः।

एतादृशगुणफलद्वारेण प्रलोभ्य शुश्रूषुं प्रति आह—

(तस्य वै स्वर एवेति) तस्य साम्नः स्वर एव कण्ठताल्वादीनां माधुर्यमेव स्वं भूषणमलङ्कारः केन प्रकारेण स्वसम्पत्तिः कर्तव्या तत्राह—

( तस्मादित्यादि ) तस्मात् यस्मात्कारणात् एवं तस्मादेव कारणात् आर्त्विज्यं ऋत्विक्कर्मकरिष्यमाण उद्गाता वाचि वाण्यां स्वरं माधुर्यमिच्छेत्। तस्मात् कारणात यज्ञे स्वरवन्तं कण्ठमाधुर्यादियुक्तमेवोद्गातारं जना दर्शका यजमानश्च दिदृक्षन्ते द्रष्टुमिच्छन्ति यज्ञे तमेवोद्गातारं वर्णयन्ति लोका इति।

( अथो यस्येत्यादि ) अत्राथो शब्दो यथार्थकः तथा च यथा यस्य स्वं धनं भवति तं धनवन्तं लोका द्रष्टुमिच्छन्ति तथा स्वरात्मकधनवन्तमुद्गातारमपि यज्ञे लोका द्रष्टुमिच्छन्त्येवेति।

सामस्वरविशेषे स्वत्वज्ञानस्य फलं दर्शयति—

( भवति हास्येत्यादि ) य उपासक एवं यथोक्तप्रकारेण साम्नः स्वं स्वरात्मकं धनं वेद विजानाति। अस्योपासकस्य स्वं धनं भवति इति। २५।

( तस्य हैतस्येत्यादि ) य उपासकस्तस्य है तस्य साम्नः सुवर्णं अयं वर्णः कण्ठ्योऽयं दन्तस्थानीय इत्येवं ज्ञानपूर्वकं वर्णानामुच्चारणं साम्य-

**र्णम् तस्य वै स्वर एव सुवर्णम् भवति हास्य सुवर्णम् य एव-मेतत्साम्नः सुवर्णम् वेद ।। २६ ।।**

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ।। २७ ।।**

पदवाच्यप्राणस्यान्तरं सुवर्णं धनं वेद विजानाति तस्य खलूपासकस्य सुवर्णं लोकप्रसिद्धहिरण्याख्यं भवति तल्लाभो जायते इत्यर्थः । तस्य साम्नः स्वरः कण्ठताल्वादिलक्षणः सुवर्णं वेद विजानाति तादृशोपासकस्य सुवर्णं भवति ।। २६ ।

तस्य हैतस्य साम्नो य उपासकः प्रतिष्ठां वेद विजानाति तत्र प्रतितिष्ठति, यस्य साम्नः प्रतिष्ठां यो वेद स उपासकःप्रतितिष्ठति, प्रतिष्ठायुक्तो भवति । एवं फलं दर्शयतित्वा श्रवणेच्छामुत्पाद्याह—

( तस्य वै वागेव प्रतिष्ठेति ) तस्य खलु साम्नः प्राणस्य वागेव जिह्वामूलादीन्यष्टौ स्थानान्येव प्रतिष्ठा ।

( वाचि हीत्यादि ) हि यस्मात्कारणात् प्राणो वाचि जिह्वामूलोयादिस्थानेषु प्रतिष्ठितः सन् खलु इति निश्चयेनैतद्गानं गीयते गानं सम्पादयति, तस्मात्कारणात् प्राणस्य वागेव प्रतिष्ठा स्थितिः स्थानम् । एके आचार्याः इत्येवमाहुः कथयन्ति ।

( अन्ने इति ) अन्नेऽन्नपरिणामभूते देहे प्रतिष्ठितः स्थितः सन् गीयते उद्गानं करोति इति ।। २७ ।।

यथोक्त प्रकारेणोद्गातृप्राणविद्याया उपदेशानन्तरमीदृशप्राणोपासकमुद्गातारं प्रति प्रार्थनारूपाणां मंत्राणां ब्रह्मलोकाभ्यारोह साधनतया अभ्यारोहपदवाच्यानाम् प्रयोगसमयं मंत्राणामर्थञ्च दर्शयितुमुपक्रमते—

**अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेदसतो मा सद्-**

(अथात इत्यादि) अथ प्राणविद्योपदेशानन्तरं यस्मात्प्राणविदा देवत्वप्राप्तये प्रयुज्यमानमभ्यारोहफलकं जपात्मककर्मतस्तस्माद्विधीयते । प्राणविदामेवैतत् । वक्ष्यमाण जपकर्मगणोऽभ्यारोह इति नाम । प्राणविद्वांसमाभिमुख्येन प्राणात्मानमारोहत्यनेनेति अभ्यारोहपदव्युत्पत्तेः अभ्यारोहस्य सर्वत्रोद्गानकाले प्राप्तौ सत्यामाह—पवमानानामेवाभ्यारोहः बहिष्पवमानमाध्यन्दिनपवमानार्भवपवमानभेदभिन्नानां त्रयाणामेव पवमानामभ्यारोहमन्त्रा जप्तव्या न तु तदतिरिक्ताः । पृष्ठादिस्तोत्राणामभ्यारोह मन्त्रा जप्तव्याः ।

(स वै खलु इत्यादि) स वै खलु प्रस्तोता यः साम प्रस्तौति यः साम प्रस्तौति स प्रस्तोता भवति । स प्रस्तोता यत्र यस्मिन्काले साम प्रस्तुयात् सामगानमारभेत तदा तस्मिन्काले एतानि वक्ष्यमाणानि यजूंषि यजमानो जपेत् तादृशमंत्राणां जपं कुर्यात् । एतच्च जपकर्म याजमानिकमेव । मंत्राणां देवत्वसाधनत्वादिप्रार्थनार्थत्वादिति । तान्येव यजूंषि पठति ।

(असतो मेत्यादि) असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृत गमयेति । अत्रेति शब्दो मंत्रत्रयस्य समाप्ति द्योतयति एतावन्त एव त्रयो मन्त्राः यद्यपि एतेषां मंत्राणामर्था न स्पष्टाः । अतो ब्राह्मणभागः स्वयमेव मंत्रार्थं दर्शयति ।

(स यदा हेत्यादि) स यदा हानेन मंत्रेण यत्प्रतिपाद्यमाह तदमृतं मां कुरु एतदेवाह । मा माम् असतः सकाशात् सद्गमय । तत्र असदितिपदेन मृत्योर्ग्रहणं तथा चासतो मृत्योः संसारात् सद् गमयामृतं प्रापय तदमृतं मां कुरु इत्यर्थः, तमसो मा । तमसः सकाशात् मा मां ज्योतिर्गमय प्रापय । तत्र मृत्युरेव तमः तस्मात् मृत्योः सकाशात् ज्योतिरमृतं मां कुरु ।

गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति स यदा-
हासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं
गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्यु-
र्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवै-
तदाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्ति अथ
यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु
वरं वृणीत यं कामं कामयेत तं स एष एवं विदुद्गाताऽ-
एतदेवाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्तीति ।

(अथ यानीतराणीत्यादि) यस्मात्कारणात् त्रिषु पवमानेषु यजमानेन स्वगतफलप्राप्तिकामनया याचित उद्गाता अतो यजमानगतफलमुद्दिश्योद्गाता पवमानफलायोद्गानमसतो मा सद्गमयेत्यादिना कुर्यात् ।

(अथ यानीतराणीत्यादि) अथ त्रिषु पवमानेषु यजमानायोद्गानकरणानन्तर यानि इतराणि नव स्तोत्राणि तेषु नवस्तोत्रेषु प्राणविदुद्गाता आत्मने स्वप्रयोजनाय । अन्नाद्यमन्नं च तदाद्यं चागायेत् गानद्वारा तत्सम्पादयेत् । तस्मात्कारणात् तेषु पवमानातिरिक्तनवस्तोत्रेषु स्वात्मार्थं यजमानाय यं कामं कमनीयं वस्तु कामयेताभिलषति तं वरं वृणीत तं तं काममागानेनागायेन साधयेत् आगानद्वारा तं तं कामं वृणीत प्रार्थयेत् । स एव एवं वित् प्राणविद्याविद्वान् उद्गाता आत्मने स्वार्थं वा यजमानाय वा यं काममभिलषित कामयते इच्छति तमागायति आगानेन तं सम्पादयतीति । तत् एतत् पूर्वोक्तं प्राणवेदन लोकजिदेव ब्रह्मलोकप्राप्तौ साधनमेव भवति, प्राणविद्याद्वारा ब्रह्मलोकपर्यन्तस्यापि प्राप्तिर्भवतीति ।

( न हैवालोक्यताया इत्यादि ) य एवमेतत्साम वेद य उपासक एवं

ऽस्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्ध तल्लोकजिदेव न है वालोक्यताया आशास्ति य एवमेतत् साम वेद ॥ २८ ॥

इति बृहदारण्यकोपनिषदि प्रथमाध्यायस्य तृतीय ब्राह्मणम् ३

## अथ प्रथमाध्याये चतुर्थं ब्राह्मणम्

आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत् तस्मा-

सामशब्दवाच्यमांगिरसत्वादि पूर्वोक्तगुणविशिष्टं वेद तदुपास्ते स उपासक अलोक्यतायाः लोक्यत्वं लोकार्हत्व तदभावोऽलोक्यता । ब्रह्मलोकार्हत्वाभावतोभयेन । न है वा शास्ति नैवाशास्ते साधनान्तरं नेच्छति तस्यानयैव प्राणविद्यया कृतार्थत्वात् । प्राणविद्याबलेनैव ब्रह्मलोकप्राप्तिसम्भवेन तदर्थं कारणान्तरान्वेषणाभावादिति भावः । २८॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये प्रथमाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

श्रीसाकेताधिपतितदुपासनतत्प्राप्तीनामेव परमपुरुषार्थत्वं तथा तत्प्रसंगात् सनकसनन्दनसनातनादिपरमयोगीश्वरविषयलक्षणातिसृष्टेः सृष्टिविसृष्ट्यपेक्षयाऽतीवोत्कृष्टत्वमिति प्रतिपादनायारभते—

( आत्मैवेदमग्रे इत्यादि ) इदं परिदृश्यमानं स्थावरजंगमात्मकं फलितपुष्पितवृक्षवदवस्थितं जगत् । अग्रे अत्यत्रेः पूर्वम् आत्मैव परमात्मस्वरूपमेवासीदभवत् । यद्यप्यन्यत्रात्मशब्दस्य जीवपरकत्वं दृष्टं तथापि "आत्मैव वेदमग्रे" इति वाक्यकारणवाक्यतयासाकेताधिपतिद्योतकत्वमेव । अन्यथा जीवस्य तादृशविलक्षणज्ञानप्रयत्नादीनामभावात् विलक्षणसृष्टिकर्तृत्व न स्यात् स यो हैतमग्नि वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठित वेद ।

**दष्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र  उक्त्वाथान्यन्नामप्रब्रूते**
**यदस्य भवति सयत्पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन**

(अन्वय पुरुषविध इत्यादि) बहुषु स्थलेषु पुरुषशब्दस्य परमेश्वरे प्रयोगदर्शनात्। अत्रापि जीवे प्रयुज्यमानोप्यात्मशब्दः परमेश्वरस्यैव वाचकः। पुरुषविधः पुरुषस्य हस्तपादादिमतो विधेव विधा आकारो विद्यते यस्य स पुरुषविधः पुरुषाकारः। अस्य पुरुषविधत्व चानन्दमयत्व समर्पयति, तथोक्तं तैत्तिरीयके "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" इत्यादिनोपक्रम्य "आनन्दाद्ध्येव खलु इमानि भूतानि जायन्ते आनन्दमय" इत्याद्युपसंहारदर्शनात्। तस्माद् व्यवस्थितं यदत्रात्मशब्दः परमेश्वरवाचकः। एवं चेद परिदृश्यमानमिदं जगत् चराचरात्मकं सृष्टिपूर्वं परमेश्वररूपतयाऽव्यक्तनामरूपक आसीदिति—

(सोनुवीक्ष्येत्यादि) सः पुरुषः कारणावस्थः परमेश्वरः अनु ईक्ष्य साक्षात्कुर्वन् इतस्ततः पश्यन् आत्मनः स्वस्मात् स्वशरीरात् स्वभिन्नं पदार्थजातं स्वतोविभक्तं किमपि न दृष्टवान् बहुदर्शनाय कृतप्रयत्नोऽपि स्वस्ताद्भिन्नं विभक्तं नापश्यदित्यर्थः 'परेऽव्यये सर्व एकीभवती" ति रीत्या दुग्धपतितशर्करावत् चिदचित्सकलप्रपञ्चस्य परमेश्वरादविभक्तत्वात्। यदि परमेश्वराद् विभक्तं किञ्चिद्भवेत्तदा स द्रक्ष्यति परंतु सर्वमपि वस्तुजातं जडचेतनात्मकमविभक्तमेवासीत् परमात्मनाऽन्यो विभक्तं किंचित् नापश्यत्। यथा तिलावस्थं तैलं तिलदशायां न पश्यति कश्चित्, तथैव स परमेश्वरोपि स्वविभक्तं नापश्यदिति भावः।

(सोहमस्मीत्यादि) स अहमस्मि सर्वात्मा एव प्रकारेणाग्रे प्रथमतो व्याहरत् व्याहृतवान् यस्मात्तस्मात् अहं नामकः स हिरण्यगर्भश्चतुर्मुखोऽभवत्। तत्राहमिति हिरण्यगर्भस्य नाम। तदुक्तं महाभारते—

"तस्मात्पद्मादभवद् ब्रह्मावेदमयो निधिः।
अहंकार इति ख्यातः सर्वभूतात्मभूतकृत्॥ इति॥

**औषत्तस्मात्पुरुष औषति ह वै स तं योस्मात्पूर्वो बुभूषति य एवं वेद ॥ १ ॥**

एव चाहमस्मि अहंकारनामकः स्याम् चतुर्मुखः कमलासनः स्यामिति सङ्कल्पवाक्यमुच्चारितवान्, ततोहं नामकश्चतुर्मुखो जातः ।

(तस्मादपीत्यादि) यस्मादेव कारणात् परमेश्वरेण सर्वप्रथमं कमलासने चतुर्मुखेऽहं शब्दस्य प्रयोगः कृतस्तस्मादेव कारणात् एतर्हि इदानीं संसारकालेपि केनचित्पुरुषेणामन्त्रित आहूतः सन् अहमयमिति अयं जनोऽहमिति अग्रे प्रथमत उक्त्वा कथयित्वा । अथ तदनन्तरम् यदस्यान्यन्नाम एकादशेहनि पिता नाम कुर्यादितिनियमात् पित्रादिना कृत देवदत्त–यज्ञदत्तादिकमित्यादिप्रब्रूते कथयति । यतः परमेश्वरे यथाकृतं तथा इदानीं जना अपि कुर्वन्ति "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन" इति न्यायादिति ।

( स यत्पूर्व इत्यादि ) स आत्मा परमेश्वरः यत् यस्मात्कारणात् अस्मात् सर्वस्मात् पूर्वः तथा यस्मात्कारणात् सर्वान् पाप्मनः पापसमुदायान् । औषत् अदहत् तद्दहनमकरोत् । तस्मादेव कारणात् अयं पुरुषः पुरुषपदवाच्यो भवति । यद्यपि तत्शब्दः प्रक्रान्तपरामर्शक इति स इत्यत्र तत्पदेन अहं नामक चतुर्मुखस्य ग्रहणं प्राप्तं तथापि न तस्य ग्रहणं किन्तु दूरस्यापि परमात्मनो बुद्धया सन्निकृष्टत्वात्तस्यैव तत्पदेन ग्रहणम् । अव्यवहितपूर्वस्याहंनामकस्य कर्मपराधीनतया सर्वपापनाशकत्वासम्भवात् । परमेश्वरस्य सर्वकारणत्वे सति सर्वपापदाहकत्वस्य पुरुषपदशक्यतावच्छेदकस्य सम्भवात् । यो हि परमेश्वरः "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनं" इत्यादि श्रुतिप्रतिपादितसर्वसंहारं करोति तदा का कथा पापदाहकत्वे "क्षीयन्ते चास्य कर्माणि" इत्यादिना सर्वकर्मनाशकत्वं तस्यैव सिद्धं भवति न त्वन्यस्य । पुरि शरीरे शयनात् पुरुषः परमेश्वरः । अतोस्मिन्मंत्रे आत्मबोधकतत्पदेन परमेश्वरस्यैव ग्रहणमुचितमुपक्रमादिबलादिति । एतादृशपरमेश्वरोपासनायाः फल दर्शयितुमाह—

**सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्म-दन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय**

( ओषति ह वै इत्यादि ) य उपासक एवं पुरुषत्वनिर्वचनप्रकारं सर्वपापदाहकत्वगुणविशिष्टं परमेश्वरं वेद विजानाति तदुपासनं करोति स उपासकः तं पुरुषम् ओषति दहति विनाशयति । यो हि पुरुषोऽस्मात् उपासकात् पूर्वो बुभूषति श्रेष्ठो भवितुमिच्छति । एतस्मादहं श्रेष्ठः स्यामिति य इच्छति तं पराभवति विजिगीषुं परं सर्वथैव तिरस्करोतीत्यर्थः । एन पराभवितुमिच्छन्नपि उपासकात् पराभूतो उपासनाबलात इति भावः ।। १ ।।

सोऽबिभेदित्यादि ) सः यो यं प्रथमशरीरी प्रजापतिश्चतुर्मुखः स अबिभेत् भयं प्राप्तवान् । अत्र तत्पदेन न प्रकृतस्य परमेश्वरस्य परामर्शः । यतस्तस्यापहतपाप्मतया पापजनितभयसंसर्गस्याभावात् । अपि तु अत्रत्यतत्पदेन चतुर्मुखप्रथमशरीरिप्रजापतेरेव परामर्शः । स प्रजापतिरात्मन एकाकितां दृष्ट्वा अहमेकाकी कोऽपि मां हनिष्यतीति अस्थानभयाविष्टोऽभवदिति—

( तस्मादेकाकी बिभेतीति ) यस्मात्कारणात् एकाकी सहायकान्तर-रहितः प्रजापतिर्भीत इव जातस्तस्मात्कारणात् लोकेऽद्यापि सहायकरहित एकाकी पुरुषो बिभेति भयं प्राप्नोति ।

( स हायमीक्षां चक्रे इति ) एवमसहायत्वात् भीतः सोऽयं प्रजापतिश्चतुर्मुखः । ह शब्दोवृत्तार्थस्मरणे । ईक्षां चक्रे ईक्षणं विचारं कृतवान् अचिन्तयदित्यर्थः किमिति विचारं कृतवान् तत्राह—

( यन्मदन्यदित्यादि ) यद्यस्मात्कारणात् मदन्यत् मत्तोऽन्यत् भिन्नं विरोधि किञ्चिदपि सत्त्वं नास्ति । न विद्यते । कस्मात्कारणात् अहं बिभेमि । दृश्यते खलु लोके यदि कश्चित् विरोधी समुपस्थितो भवेत् हननाय तदाऽसहायो बिभेति मम तु कश्चिद्विरोधी एव न विद्यते तदा-

कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयम्भवति ॥ २ ॥

स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्

सहैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं

असहायोऽप्यहं कथं बिभेमि । अनुचितमिदं भयकारणमिति विचारं कृतवान् प्रजापतिरिति ।

(तत एवास्येत्यादि) तत एव विचारजनितविवेकात्मकज्ञानादेवास्य प्रजापतेर्भयं वीयाय भयं निर्गतं गतभयोऽभवदित्यर्थः । उक्तमर्थं श्रुतिः स्वयमेव दर्शयति—

(कस्माद्धीत्यादि) कस्मात्कारणात् प्रजापतिरभेष्यत् भयभीतः स्यात् यतो द्वितीयाद्वै भयं भवति, विरोधिसकाशात् भयं भवति ततश्च भयकारणस्य द्वितीयस्याभावात् एकाकिनः प्रजापतेः कुतो भयमिति । अद्वैतसाक्षात्कारात् प्रजापतेर्भयनिवृत्तिर्जातेत्यर्थो न मनोरमः । एवं सति आत्मरतियुक्तस्य तस्यारतिरिरंसाप्रतिपादकोत्तरवाक्येन स्पष्ट एव विरोधः प्रसज्येत। न च प्रारब्धकर्मवशात् प्रजापतेररत्याद्यनुवृत्तिरितिवाच्यं, तथा सति तद्युक्तैव भयाद्यनुवृत्तेरपि सम्भवात् । भयं वीयायेति वाक्यं निरर्थकमेव स्यात् । इत्यलं महता विवेचनेनेति ॥२॥

(स वै नैवेत्यादि) स चतुर्मुखः प्रजापतिरेकाकित्वात् न रेमे रतिं नो प्राप्तवान् । तत्र रतिर्नामेष्टार्थसम्बन्धजन्या प्रीतिस्तादृशरतेर्द्वितीयसापेक्षत्वात् एकाकी रतिं नो लब्धवानित्यर्थः । यस्मादेकाकिन आद्यस्य चतुर्मुखस्य रतिर्नाभूत् तस्मात्कारणादद्यापि लोक एकाकी न रमते-रतिं न प्राप्नोति इति । तदनन्तरं स प्रजापतिः रमणार्थं द्वितीयं रतियोग्यसहायकं ऐच्छत् । तदर्थमिच्छां कृतवानिति ।

(स हेत्यादि स ह प्रजापतिः तत्र हशब्दो वृत्तार्थस्मरणे यथा लोके रत्यर्थं स्त्रियमिच्छति तथा तामिच्छन् स । एतावान् तावत्परिमा-

**द्वेधापातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्द्धबृग-ल्पमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया**

णेन विवृद्ध आस बभूव । यथा स्त्रीपुमांसौ रतिप्रयोजनाय संपरिष्वक्तौ यावत्परिमाणौ स्याताम् तावत्परिमाणकोऽभूदिति ।

( स इममित्यादि ) ततः स चतुर्मुख इमं विवृद्धमात्मानं स्वकीयं शरीरं द्वेधा द्वि प्रकारेणापातयत् पातितवान् । ततः पतिश्च पत्नीचाभव-तामिति । ततस्तस्मात्पातनादेव पतिर्मनुनामकः पत्नी च शतरूपा चाभवतां बभूवतुरिति तदुक्तं पुराणे विष्णौ ।

"ब्रह्मणोऽभून्महान्क्रोधस्त्रैलोक्यदहनक्षमः ।
भ्रुकुटी कुटिलात्तस्य ललाटात्क्रोधदीपितात् ।।
समुत्पन्नस्तदा रुद्रो मध्यान्हार्कसमप्रभः ।
अर्धनारीनरवपुः प्रचण्डोऽतिशरीरवान् ।।

विभजात्मानमित्युक्त्वा तत्रैवान्तर्दधौ ततः ।
तथोक्तोऽसौ द्विधास्त्रीत्वं पुरुषत्वं तथाऽकरोत् ।।
भागवते—कस्य रूपमभूद् द्वेधा यत्कायमभिचक्षते ।
ताभ्यां रूपविभागाभ्यां यत्कायमभिचक्षते ।। इति ।

( तस्मादिदमित्यादि ) यस्मात्कारणात् पतिपत्न्यावेकशरीरविभक्ते तस्माद्धेनाः स्वः स्वस्यात्मन् इदमेतत् शरीरम् विवाहात्पूर्वम् अर्धविदल-मिव विभागद्वयमिव भवन् लक्ष्यते इति ह याज्ञवल्क्यो ऋषिराहस्म उक्तवानिति ।

( तस्मादित्यादि ) यस्मात्कारणात् पुरुषस्य शरीरमर्धमेव विवाहा-त्पूर्वमर्धविदलम् तस्मात्कारणात् अयं पुरुषदेहः आकाश एकांशो विवाहा-दनन्तर स्त्रिया पूर्यते यथा शक्त्यादीनां बिभागः पुनः सम्पुटिकरणेन "अर्धो वा एष आत्मनो यत्पत्नी"ति श्रुत्यन्तरात् । अयमर्थः एकस्यैव

**पूर्व्यत एव तां समभवत्ततो मनुष्या अजायन्त ॥ ३ ॥**

**सो हेयमीक्षाञ्चक्रे कथं नु मात्मन एव जनयित्वा संभवति हंत तिरोऽसानीति सा गौरभवदृषभ इतरस्तांसमेवा-**

देहस्य भागद्वयं पतिश्च पत्नी च । तत्र विवाहात्प्राक् असम्पूर्णमिव भवदपि शरीरं विवाहादनन्तरं तत् शरीरं स्त्रिया पूरितं सत् सपूर्णमिव भवतीति । अथ स्त्रीपुरुषयोर्मिथुनद्वारेण सृष्टिं दर्शयितुमाह—

( तां समभवदिति ) तदनन्तरं स मनुः शतरूपां स्वकीयपत्नीरूपेण कल्पितां तां देहार्धभूतां समभवत् मिथुनभावेनोपगतवान् । ततो मिथुनभावादनन्तरं मनुष्या अजायन्त समुत्पन्ना अभवन् । उभयोर्मैथुनानन्तरं मनुष्यस्योत्पत्तिर्जातेत्यर्थः । तदुक्तं विष्णुपुराणे—

शतरूपां च तां नारीं तपोनिर्धूतकल्मषाम् ।
स्वायम्भुवो मनुर्देवः पत्नीत्वे जगृहे प्रभुरिति ।।३।।

मनुष्यसृष्ट्यनन्तरं गवादिसृष्टिं दर्शयितुमाह—

( सो हेयमित्यादि ) सेयं शतरूपाख्यकन्यका "न सगोत्रां समानप्रवरां भार्यां विन्देत्" असगोत्रा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" इत्यादि स्मार्तवाक्यं स्मरन्ती ईक्षांचक्रे विचारणां कृतवती । कथं केन प्रकारेणायं मनुर्मां मां दुहितृकल्पाम् आत्मनः शरीरादेव जनयित्वा समुत्पाद्य सम्भवति, मया सह मैथुनाय कथं प्रवृत्तः ?

( हन्तेत्यादि ) हन्त तिरोऽसानि जात्यन्तरेण तिरोभूता भवानि एवमीक्षणं कृत्वा । अयं भावः यथा अहं सवर्णदोषं पश्यामि दृष्ट्वा ततो निवृत्तिमिच्छामि तथा सोप्यवश्यमेव दोषं पश्यति । सवर्णागमके तथापि स तु कामान्धः तेन विद्यमानमपि दोषं न पश्यति । तदुक्तं—

दिवा पश्यति नोलूको रात्रौ काको न पश्यति । अपूर्वः कोपि कामान्धो

**भवत्ततो गावोऽजायन्त वडवेतराभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्तां समेवाभवत्तत एकशफमजायताऽजेतराभवद्बस्त इतरोऽविदितरामेष इतरस्तां समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत् सर्वमसृजत ॥४॥**

दिवानक्तं न पश्यती" त्यतः मया जात्यन्तरं स्वीकर्तव्यम् । शास्त्रनिषेधस्य मनुष्याधिकारात् शास्त्रक्रमलङ्घने मनुष्य एव प्रत्यवायभाग् भवति, न तु तिर्यग्योनिरिति विचार्य सा शतरूपा गौरभवत् । गोयोनिं प्राप्तां कदाचित्मां प्रत्यक्ष्यतीति विचार्य । किन्तु इतरो मनुर्वृषभः पुंगवोऽभवत् । वृषभरूपं धृत्वा सममवदेव पुनरपि मैथुनमुपगतवान् । मैथुनान्नैव निवृत्त इति । ततो गवि मैथुनकरणात् गावो गोजातीयका वृषभादयोऽजायन्त समुत्पन्ना अभवन्निति । पुनरपि मैथुनात् निवृत्तिमीहमाना इतरा शतरूपा वडवा अश्वजातीयाऽभवत् । तत इतरो मनुर्वडवारूपां शतरूपां दृष्ट्वा तया सह संगमाय अश्ववृषः पुरुषाश्वो रेतःसेक्ताऽभवत् । तदनन्तर इतरा शतरूपा गर्दभी अभवत् । इतरो मनुर्गर्दभः पुरुषजातीयोऽभवत् । अश्वाश्वतरगर्दभाख्याः समुदपद्यन्त । तत इतरा शतरूपा अजाऽभवत् इतरोमनुर्वस्तश्छागोऽभवत् । तत इतरा अविर्जाता तदितरो मेषः समभवत् । तां तां स समेवाभवत् तामजां छागस्तामविं च मेषः समभवत् तया तया सह मैथुनमकरोत् ।

( ततोऽजावयोऽजायन्तेत्यादि ) तदनन्तरमजा आवयश्चाजायन्ताभवन् विशेषरूपाणामानन्त्येन प्रातिस्विकरूपेण तत्कथनासंभवात् संक्षिप्य तिर्यक् सृष्टिं दर्शयितुमाह—

( यदिदं किञ्चेत्यादि ) यत्किंचिदिदं मिथुनं स्त्रीपुरुषलक्षणम् द्वन्द्वम् आपिपीलिकाभ्यः पिपीलिकामभिव्याप्य तत्सर्वं जगत् एवमेव पशूत्प्रकारेणासृजत समुत्पादितवानिति ॥४॥

**सोऽवेदहं वाऽअस्मृष्टिरस्म्यहं हीदं सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥५॥**

**अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत**

( सोऽवेदहमित्यादि ) सः प्रजापतिरिदं परिदृश्यमानं मनुष्यादारभ्य पिपीलिकान्तं सर्वं जगत्स्टष्ट्वा अवेदावगतवान् । किमवगतवान् तत्राह- अहं वा वाहमेव सृष्टिरस्मि सृज्यते समुत्पद्यते इति सृष्टिरर्थात् सृष्टं जगदहमेव मत्तादात्म्यापन्नमेव । कस्मादेवं तत्राह—हि यस्मात्कारणात् इदं सर्वं पिपीलिकान्तं जगदहमेवासृक्षि सृष्टवान् तस्मात् मदभिन्नमेतत् नास्ति । सृज्यमानस्य जगतः स्वाभिन्नत्वं प्रजापतिरवगतवानित्यर्थः ।

( ततः सृष्टिरभवदिति ) यस्मात्कारणात् प्रजापतिरहमेव सृष्टिरिति अभेदात्सृष्टिशब्दं प्रयुक्तवान् तस्मात्कारणात् प्रजापतिः सृष्टिरभूत् सृष्टिनामाऽभवत् । स्वस्मिन्सृष्टेरभेदोपचारं कृतवान् ततः सृष्टिनामा सोऽभवदित्यर्थः । स्रष्टुः प्रजापतेरेतादृशगुणविशिष्टस्योपासनं यः करोति तस्य कीदृशं फलं भवति तत्राह—

सृष्ट्यां हेत्यादि ) य उपासक एवं सर्वसर्जकत्वगुणविशिष्टं प्रजापतिं वेद विजानाति तदुपासनं करोति यथोक्तसृष्टिनिरुक्तिं जानाति स एवं विद्वान् एतस्यां प्रजापतेः सृष्ट्यां सृष्टो भवति स्रष्टा भवति प्रजापतिवत् सोपि सर्जको भवति । अथवा प्रजापतेः सृष्टौ स मुख्यो भवतीति ॥५॥

उक्तप्रकारेणानुग्राह्य सृष्टिं दर्शयित्वाऽनुग्राहकसृष्टिं दर्शयितुमाह- (अथेत्यभ्यमन्थदित्यादि) अत्राथशब्दमानन्तर्यार्थकः अनुग्राह्यसृष्टेरनन्तरम् यद्वा "ओंकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा कण्ठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभौ" इतिस्मृतेर्मंगलार्थोयमथशब्दः तथा च अथेति मङ्गलशब्दोच्चारणपूर्वकं स प्रजापतिरभ्यमन्थत् मन्थनमकरोत् ।

**तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरः तद्यदिदमाहुरमुं यजामुं यजेत्येकैकन्देवमेतस्यैव सा विसृष्टि-रेष उ ह्येव सर्वे देवा अथ यत्किञ्चेदमार्द्रं तद्रेतसोऽसृजत**

मुखाच्चयोनेः मुखे हस्तौ विनिक्षिप्याभ्यमन्थत् । एवं मुखं हस्ताभ्यां निष्पिष्य स प्रजापतिर्मुखाद्योनेर्हस्ताभ्याञ्च योनिभ्यामग्निं ब्राह्मणजातेर-नुग्राहकमसृजतोत्पादितवान् ।

( तस्मादित्यादि ) यस्मात्कारणात् दाहकस्याग्नेर्हस्तौ मुखञ्च योनिरुत्पत्तिस्थानं तस्मादेव कारणात् अग्नियोनित्वादेवेत्यर्थः । एतदुभयमपि हस्तौ मुखं चान्तरतोऽभ्यन्तरे मध्ये इत्यर्थः । अलोमकं लोमरहितमिव भाति दिस्पष्टाः केशानोपलभ्यन्ते तत्रतत्र । योनेर्मध्येऽलोमकत्वप्रसिद्धिं दर्शयति—

(अलोमका हि योनिरन्तरत) इति लोमरहिता स्त्रीणां योनिरन्तरत इति लोक प्रसिद्धिस्तत्तस्मात्सामान्यात् हस्तौमुखं चोत्पादकत्वादग्नेर्लोम-रहितमेवेति ।

( तद्यदिदमित्यादि ) कार्यस्य कारणाभिन्नत्वात् सृज्यस्य सर्वस्यापि स्रष्टुःप्रजापतेरभेद एवातोपासकानां कथनमपि न भेदे मूलम् । तत् तस्मात् कारणात यज्ञे वाजपेयादौ कर्ममीमांसका अमुं यजामुं यजेति एकैकं वासवादिकमाहुः । तदेतस्यैव प्रजायते । सा विसृष्टारनेकप्रकारिका सृष्टिः तस्मात्तत्सृष्टत्वादेव सर्वे इन्द्रादयो देवाः एष उ एव प्रजापतिरेव । कार्यकारणयोरभेदोपचारात् तथा कथनमिति । एक एव प्रजापतिरुभयो-पासनीय इति तत्राग्निसृष्टिं दर्शयित्वा अन्नादिसृष्टिं दर्शयितुमाह—

( अथ यत्किञ्चेदमित्यादि ) अथाग्निसर्गकरणादनन्तरं यत्किञ्चिदिदं कार्यमार्द्रं द्रवात्मकं दृश्यते तत्सर्वं रेतसः प्रजापतिरसृजतोत्पादितवान् "शिश्नाद्रेतो रेतस आपः" इतिश्रुत्यन्तरात् । द्रवात्मकं सर्वं कार्यं जातं स्वकीयरेतसा प्रजापतिः समुत्पादितवान् इत्यर्थः ।

तदु सोम एतावद्वा इदं सर्वमन्नञ्चैवान्नादश्च सोम एवान्नम-ग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्यां हास्यै-तस्यां भवति य एवं वेद ॥ ६ ॥

( तदु सोमः ) तत् द्रवरूपमेव सोमः सोमरसः ।

( एतावद्वेत्यादि ) इदं सर्वं परिदृश्यमाने जगत् एतावदेव । अन्न चान्नादश्च नातोधिकम् । कस्य सोमत्वमग्नित्व च तत्राह ।

( सोम एवेत्यादि ) यत् अद्यते भक्ष्यते तत् अन्नं स सोम एव । सोमस्य भक्ष्यमाणत्वादन्नत्वम् । यश्चान्नादः सोग्निः दाहकत्वाद-ग्नेरन्नादत्वं भवति, अत एव जगत्सर्वमग्नीसोमीयात्मकमेवेति ।

(सैषा ब्रह्मणोऽतिसृष्टिरित्यादि) यत् यस्मात् कारणात् श्रेयसोऽति-सयितप्रशस्तान् देवान् ऊर्ध्वरेतसः सनकसनन्दादीन् भगवतः साक्षात् पार्ष-दलक्षणान् असृजतोत्पादयामास प्रजापतिः, तस्मात्कारणात् ब्रह्मणः प्रजापतेरेषा सृष्टिरतिसृष्टिः अतिशयिता सृष्टिरतिसृष्टिरिति कथं सनका-दिसृष्टेरतिसृष्टित्वं तत्राह—

( अथ यन्मर्त्य इत्यादि ) यत् यस्मात्प्रजापतिः स्वयं मर्त्यो मरणधर्मा अस्मदादिवत् तथापि अमृतान् मुक्तियोग्यान् ज्ञानवैराग्यैश्वर्यादिसम्पन्नान् मुमुक्षून् सनकादियोगीन्द्रान् देवानसृजत् उत्पादयामास । तस्मादेव कारणात् प्रजापतेरियं सृष्टिरतिसृष्टिरिति कथ्यते । इतरसृष्ट्यपेक्षया अस्याः सृष्टे-र्विलक्षणत्वात् । य उपासक एनामतिसृष्टिं प्रजापतेर्वेद विजानाति स खलूपासकः प्रजापतेरस्यामतिसृष्ट्यामतिसृष्टौ भवति सर्वस्मान्मुख्यो भवतीति भावः ॥ ६ ॥

**तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूप इति तदिदमप्येतर्हि नामरूपाभ्या-**

अथ "आत्मैवेदमग्रे आसीदिति" कथनमयुक्तमिवाभाति ब्रह्मणो मर्त्यत्वं तत्पुत्राणां सनकादीनाममर्त्यत्व सनकादित्वे ज्ञायते इत्यपि कथनम् । यदिदं किञ्च मिथुनमित्यादि प्रकरणेनोत्पाद्यतया निर्दिष्टस्य मनुष्यप्रभृति-मिथुनादिलक्षणस्य समस्तस्य जगत इदं शब्दप्रतिपाद्यस्यात्माभिन्नत्वेन । आत्मैवेदमग्रे आसीदिति कथनमयुक्तमेवेति शङ्कां कृत्वा इदमादिनामरूप-युक्तत्वमपि ब्रह्मण एव तस्यात्मैवेदमग्रे आसीदित्यात्मशब्दवाच्यः सूक्ष्मचिद-चिद्विशिष्टब्रह्माभेदः सम्भवतीति एतद्दर्शयितुमग्रिमो ग्रन्थसन्दर्भ. प्रारभ्यते-

तद्धेदमित्यादि ) अत्र ह शब्दोवृत्तार्थस्मरणे तत् इदं मिथुनादि-लक्षणं सम्पूर्णमेव जगत् तर्हि तदा सृष्टेः पूर्वावस्थायामव्याकृतमविस्पष्ट-मासीत् बभूव । अव्यक्तशरीरकं ब्रह्मैव पूर्वमासीत् इत्यर्थः । न व्याकृतं न विस्पष्टमित्यव्याकृतमिति व्युत्पत्त्या व्याकृतशब्दस्याव्यक्तवचनत्वात् अव्या-कृतव्यक्तयोः पर्यायत्वादिति नामरूपविशिष्टतया अनभिव्यज्यमानत्वमेवा व्यक्तत्वम् । अविकृतपदमविकृतशरीरकब्रह्मपरकम् । तत्र हेतुमसौ नामा-यमित्यादिना प्रपंचयिष्यति । तत् अव्याकृतशरीरकं ब्रह्मनामरूपाभ्यां व्याक्रियते नामरूपवत्तया व्याकृतमासीत् विविच्य समन्तात् कृतमासी-दित्यर्थः । एतदेव दर्शयति—

( असौ नामायमिदं रूप इति ) असौ नामदेवमनुष्यतिर्यगादि नाम-करणादिकं रूपम् । तद्वत्तया व्याक्रियते इत्यर्थः । एवं चेदमादिशब्दैरपि परमेश्वरस्यैव निर्देशसंभवेन "आत्मैवेदमग्रे आसीदि" त्यत्र श्रुतौ अभेद-निर्देशेनानुपपत्तिः सूक्ष्मचिदचित्शरीरकं ब्रह्म स्थूलचिदचित्शरीरकतया स्वस्वरूपं व्याकरोदित्यभिप्रायः । व्याक्रियते इत्यत्र कर्मकर्तरि लकारोऽ-र्थात् व्याकरणक्रियायाः कर्ता कर्म च स भगवान् परमेश्वर एव । एतावान् विशेषो यत् सूक्ष्मचिदचित्शरीरकं ब्रह्म व्याकरणस्य कर्ता भवति स्थूल-

**मेव व्याक्रियतेऽसौ नामायमिदं रूप इति स एष इह प्रविष्ट**

चिदचित्शरीरकस्य व्याकरणस्य कर्मेति । अत एव "तदात्मानं स्वयमकुरुत" इति श्रुतिरप्यनुगृहीता भवति । कर्त्रन्तरापेक्षणे गौरवमात्र स्यात् । तद् ब्रह्माविभक्तनामरूपं सर्वज्ञ सत्यसङ्कल्पादिविशिष्ट स्वेनैव विभक्तनामरूपं सत् स्वयमेव व्याक्रियते इत्युच्यते । न चाव्याकृतमासीदित्यत्र क्तप्रत्ययस्य कर्मार्थकत्वमेव न तु कर्मकर्त्रर्थकत्वं तत्कथमत्र कर्मकर्त्रर्थकत्व ततश्च व्याक्रियते इत्यत्र कर्मण्येव लकार इति वाच्यम् । एवकारेण कर्त्रन्तरस्य व्यवच्छेदात् अन्यस्य कर्तुराक्षेपे गौरवाच्च व्याक्रियतेति लकारस्य कर्मकर्तरि एव वक्तुं युक्तत्वादिति संक्षेपः ।

ननु परमात्मनः कथं नामरूपादिमत्त्वं यतो देवमनुष्यादिशरीरेऽवर्तमानत्वात् । तत्र वर्तमानत्वस्वीकारे एकस्मिन् शरीरे आत्मद्वयसद्भावः स्यादिति तथा नोपलभ्यते, किन्तु एकशरीरे एकैवात्माऽनुभूयते इमां शङ्कामपवदितुमाह—

(स एष इहेत्यादि) स एषः परमेश्वर एव इह । एषु ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु प्रविष्टोऽन्तर्यामितया । "यः पृथिव्यां तिष्ठन् पृथिवी-

तयमयति य पृथिवी न वेद पृथिवी यस्य शरीरमि"त्युपक्रम्य "य आत्मनि तिष्ठन् आत्मानमन्तरोयमि"त्यादिना अन्तर्यामित्वश्रवणात् । न च यदि देवमनुष्यादिशरीरेषु परमात्मा तिष्ठति तदा मनुष्यादिदेहकृतकर्मजनितपापपुण्योत्पादितसुखदुःखाभ्यां सोपि संस्पृष्टः स्यान्मनुष्यादिवदेवेति वाच्यम् ? "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इत्यादिश्रुत्यन्तरेण तस्य परमात्मनो भोक्तृत्वप्रतिषेधात् ।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥

**आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यंत्यकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति । वदन् वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं**

इत्यादिस्मृतेश्च परमेश्वर सर्वान्तर्यामित्वात् भोक्तृत्वस्य प्रतिषेधादिति-भावः । प्रवेशमर्यादामाह —

( आनखाग्रेभ्य इत्यादि ) केशान्तादारभ्य नखाग्रेभ्यो नखाग्रंमर्यादीकृत्य सकलदेवमनुष्यादिशरीरेषु प्रविष्टोऽन्तर्यामिरूपेणेति । तत्र दृष्टान्त दर्शयति—

( यथा क्षुर इत्यादि) यथा येन प्रकारेण क्षुरः नापितास्त्रविशेषः क्षुरधाने क्षुरकोशे क्षुरो धीयते अस्मिन्निति क्षुरधानं तस्मिन् अवहितः प्रविष्टो यथा विश्वम्भरोऽग्निर्जाठरत्वेन रूपेण विश्वस्य भरणात विश्वम्भरः विश्वम्भरकुलाये काष्ठे नीडे व्याप्यावस्थित एवमेवायं परमेश्वरः सामान्यतो देहं व्याप्य स्थितो विशेषतश्च दृष्टित्वादिरूपेण देहमव्याप्य तदेकदेशेऽवस्थित इति । यो हि व्यक्तिविशेषः तिलेषु तैलवत् सर्वस्वरूपव्याप्तमपि परमात्मात्मान न पश्यति सर्वदेहावस्थितं न जानाति स जनः अकृत्स्नोऽपूर्णस्वरूपोऽसत्कल्प एवेति । सम्प्रति परमेश्वरस्यैव सर्वनामरूपवत्त्वं प्रतिपादयितुमाह —

( प्राणन्नेवेत्यादि ) स परमात्मा प्राणनुप्राणन् क्रियां कुर्वन् सम्पादयन्नेव प्राणो नाम भवति प्राण इति संज्ञां लभते । तथा वदन् वदनक्रियां सम्पादयन्नेव वाक्नामा भवति वक्ति इति वागिति व्युत्पत्तेः। तथा पश्यन् चक्षुरिन्द्रियमार्गेण दर्शनक्रियां सम्पादयन् चक्षुरिति चक्षुर्नामको भवति, चष्टे इति चक्षुरितिव्युत्पत्तेः । तथा शृण्वन श्रवणव्यापरं कुर्वन् स एव श्रोत्रम् शृणोतीति श्रोत्रमिति व्युत्पत्तेः । तथा मन्वानो मननक्रियां सम्पादयन् परमात्मा मनो मनुते इति मनः । मनोनामा भवति । एवञ्च

प्राणनादिक्रियासम्पादकतया परमेश्वरस्यैव प्राणादिनाम भवति । ततः परमात्मनः सर्वनामसर्वरूपवत्त्वं सम्यगुपपादितं भवति । तदेतानि प्राणादिकानि नामानि पाचकादिवत् यौगिकानि तत्तत्क्रियासम्पादकत्वात् । यथा पाकक्रियां कुर्वन् देवदत्तः पाचक इति कथ्यते तद्वत्परमेश्वरोऽपि देवादिशरीरमधिष्ठाय प्राणनादिक्रियां सम्पादयन् प्राणादिनामवान् भवतीति परमेश्वरस्य सर्वनामसर्वरूपाश्रयत्वं भवत्येवेति । तदेतत् श्रुत्या स्वयमेव प्रतिपाद्यते तानि एतानि प्राणादिकानि नामानि अस्य परमात्मनः कर्मनामान्येव तत्तत् क्रियासम्पादकतयैव प्राणादिकानि नामानि भवन्ति । अयमाशयः यद्यपि वेदान्तेषु भिन्नभिन्नप्रस्थानानि जगदुत्पादकवाक्यानि श्रूयन्ते "सदेव सोम्येदमग्र आसीदि"त्यत्र सतः कारणत्वमुपलभ्यते । क्वचित् "असद्वा इदमग्र आसीदि"त्यत्र असतो जगत्कारणत्वमायाति । अतो वेदान्तेषु स्वरुपव्यवस्थितेर्जगतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यम् । एवम् "तद्धेदमव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते—इत्यत्र सांख्यस्मृतिप्रसिद्धप्रधानस्य जगत्कारणत्वमायाति । तथापि असद्वा इदमग्र आसीदित्यस्य सोऽकामयत इत्यनुरोधात् । सदेव सोम्येदमग्र आसीदित्यनुरोधेन सत् शब्दः सूक्ष्मचिदचिद्विशिष्ट परमात्मपरक एव । तद्धेदमव्याकृतमासीदित्यत्रापि अव्याकृतस्य स एव इह प्रविष्टः पश्यन् चक्षुरित्यत्र समाकृष्यमाणत्वात् दर्शनादीनामचेतने प्रधानेऽसम्भवात् अव्याकृतशब्दोऽव्याकृतशब्दिता व्यक्तशरीरकपरमात्मपरक एवेति । एवं मन्वादिस्मृतावपि परमात्मनो जगत्कारणत्वं प्रतिपादयति तस्य चेतनस्य प्रधानस्य—

"ततः स्वयभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतानि वृत्तोजाः प्रादुरासीत्तमोनुदः ।

सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ।।"

**मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य**

"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।"
"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।"

इत्यादिना गीतास्वपि चेतनस्य भगवतः साकेताधिपतेरेव कारणत्वं दर्शयति न तु प्रधानस्यासदादेर्वा । एवं महाभारतेपि—

"कुतः सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ।
प्रलये च कमप्येति तन्मे ब्रूहि पितामह ॥"

इत्यादिप्रश्नस्योत्तरे प्राह—

"नारायणो जगन्मूर्तिरन्तरात्मा सनातनः" इत्यादिना चिदचिच्छरीरकपरमात्मन एव जगत्कारणत्व ग्राहयामास । ततः सिद्धं यत् परमात्मन एव सृष्टिरिति कृतं पल्लवितेन ।

( स योऽत इत्यादि ) यतो निखिलनामरूपात्मकप्रपचेन ब्रह्मविशिष्टम् । अतोऽस्मात्कारणात् य उपासक एकैकं प्राणादि क्रियाविशिष्टमेकैक विशेषाणां विशेष्यमात्रमशं वा उपास्ते आत्मत्वेन तदुपासनं करोति न स वेदनं विजानाति तदुपासनमेव न भवति यदा नामरूपात्मकप्रपञ्चविशिष्टं ब्रह्म ततः केवलविशेषणस्य विशेष्यस्य यदुपासनं तदुपासन मेवेति भावः । कुतस्तदुपासनं न भवति ? तत्राह—

(अकृत्स्न इत्यादि) एष नामरूपात्मकप्रपञ्चविशिष्टः एकैकेन एकेन विशेष्यांशेन विशेषणांशेन वा अकृत्स्नोऽपूर्ण एव यतो भवति । यत केवले विशेषणांशेन प्रपञ्चात्मके विशेष्यांशे केवले चेतनात्मके पूर्णता नास्ति विशिष्टस्यैव पूर्णत्वात् । अतोऽस्मादेव कारणात् । आत्मा नामरूपात्मकजडचेतनप्रपंचात्मकात् पृथक् सिद्धः परमेश्वरः पूर्वोक्तविशेषणविशेष्यत्वेनैवो-

**यदयमात्मानेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद ॥ ७ ॥**

**तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तर-**

पासीत तादृशस्यैव तस्योपासनं कुर्यात् । यतः अत्र नामरूपात्मकचिदचिद्विशिष्टेपरमेश्वरे एते सर्वे पदार्था एक भवति तत्रान्तर्भूता भवन्ति । विशिष्टे विशेषणविशेष्योरुभयोरप्यन्तर्भूतत्वात् । दण्डिनि दण्डपुरुषवत् । अत एवान्यत्रापि नामरूपात्मकप्रपञ्चविशिष्टस्य पूर्णत्वं प्रतिपादितमिति । तत् एतत् आत्मतत्वं अस्य परिदृश्यमानस्य सर्वस्य जडचेतनात्मकप्रपञ्चजातस्य पदनीयं प्रपदनीयं प्रपत्तव्यमिति यावत् । अथवा पदनीयं ज्ञातव्यमिदमात्मतत्वं सर्वस्य । तत्र कारणमाह—

(यदयमात्मेति) यस्मात्कारणात्सर्वस्याप्ययमात्मा–"तमेवैकमात्मानं जानथ अन्या वाचो विमुञ्चथ" इत्यादि श्रुत्यन्तरेणापि आत्मन एव ज्ञातव्यत्वप्रतिपादनादिति । अनेनात्मज्ञानेनैव एतत्सर्वं जडचेतनात्मकं वेद विजानाति । अभिज्ञानेनात्मना सर्वज्ञो भवतीत्यर्थः ।

( यथेत्यादि ) अत्र हशब्दो वैशब्दश्च प्रसिद्धार्थकः यथा येन प्रकारेण पदेन चिह्नेनानुविन्देत् वस्तु प्राप्नोति । अयमर्थः यथा दृश्यते चौरादिनाऽपहृतं गवादिधनं गोपदांकितमार्गेण गच्छन् लोको गवादिकं चौरादिगृहे वर्तमानं प्राप्नोति । एवमेव पूर्वोक्तेन सर्वस्य पदभूतेन ब्रह्मणा इदं सर्वमपि जडचेतनात्मकं वस्तुजातमनुविन्देत् विजानीयादित्यर्थः ।

( कीर्तिमित्यादि ) य उपासक एवं यथोक्तं नामरूपात्मकप्रपञ्चविशिष्टं परमेश्वरं वेद विजानाति तदुपास्ते स कीर्तिं सामान्यतो लोके ख्यातिं श्लोकं लोके स्वकीयप्रशंसां च विन्दते लभते इति ॥ ७ ॥

कस्मादात्मतत्त्वमेव विज्ञेयमित्याशङ्कायामाह—

( तदेतत्प्रेय इत्यादि ) यदयमात्मा यस्मात्कारणादयमात्मा सर्व-

**तरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥ ८ ॥**

स्मात् बाह्याद्वित्तादितः आध्यात्मिकाच्छरीरेन्द्रियमनोबुद्धिभ्योऽपि अन्तरोऽभ्यन्तरो मुख्यः एतादृशस्तस्मात्कारणात् एतत् एषः स आत्मा पुत्रात्प्रेयो मित्रात्प्रेयः सर्वस्मादेव वित्तादितः प्रेयोऽतिशयेन प्रियः परमप्रेमास्पदत्वमात्मनः यानि यानि वस्तूनि प्रियाणि तेभ्यः सर्वेभ्य एवायमात्मा सर्वथा प्रियतरः प्रियतमश्च । नैतदपेक्षयाऽन्यः कश्चित् प्रिय आत्मैव सर्वेभ्यः प्रिय इति ।

( स य इत्यादि ) स यः कश्चित् आत्मानं सर्वापेक्षया प्रियतरं जानन् । आत्मन आत्मापेक्षया अन्यमात्मभिन्नं वित्तकलत्रादिकमेव प्रिय इति ब्रुवाणमन्यं पुरुषान्तरं प्रति ब्रूयात् कथयेत् यत् ईश्वरः परमात्मा प्रियं रोत्स्यति तव प्रियस्य निरोधं करिष्यति तथा तथैव भवेत् सर्वतः प्रिय आत्मेति सिद्धान्तस्तत्र कश्चिदात्मापेक्षयाप्यन्य प्रियत्वेनाभिमन्येत तदाऽऽत्मव्यतिरिक्तं प्रियतरमिव ब्रुवाणं प्रति आत्मप्रियवेत्ता वदेत् यद् भोः आत्मव्यतिरिक्तं त्वं प्रियं वदसि तदा तव परमेश्वरः प्रियस्य निरोधं करिष्यतीति तदा अवश्यमेव तस्य प्रियनिरोधो भवदेवेति भावः । तस्मात्कारणात् प्रियं निरतिशयपरमप्रेमास्पदमात्मानं परमात्मानमेवोपासीत परमप्रेमास्पदतया परमात्मोपासनमेव कुर्यात । परमात्मानन्दस्य सर्वानन्दापेक्षया अतिशयित्वं तैत्तिरीये व्यवस्थापितमानन्दवल्ल्यधिकरणे इति तत एव द्रष्टव्यं विस्तरभिया नात्र तत्प्रपञ्चः कृत इति ।

( स य आत्मानमेवेत्यादि ) स य उपासकः प्रियं सर्वापेक्षया परमप्रेमास्पदमात्मानं परमात्मानमेवोपास्ते परमप्रेमास्पदपरमात्मन उपासन

**तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते ।**
**किमु तद् ब्रह्माऽवेद्यस्मात्तत्सर्वमभवदिति ॥ ९ ॥**
**ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति ।**

करोति अस्य तादृशोपासकस्य यत् प्रियं प्रियत्वेनाभिमत भवति तत् प्रमायुकम् । विनाशप्रतियोगि न भवति । प्रकृष्टमायुर्मरणमस्येति प्रमायुकं विनाशीति व्युत्पत्तेः अर्थात् एतादृशपरमात्मोपासकस्य प्रियवस्तुविनाशः कदापि न भवतीत्येतदेवोपासनाफलमुपासकस्येति भावः ॥ ८ ॥

( तदाहुरिति ) तद्वक्ष्यमाणम् निरतिशयः प्रतिपित्सव आहुः पप्रच्छुरिति यद् ब्रह्मविद्यया परमात्मज्ञानेन सर्व भविष्यन्तः सर्वशब्दप्रतिपादितपरमेश्वरपर्यन्ताविर्भाविकामनावन्तो मनुष्या उपासका मन्यन्ते सम्भावयन्ति ।

( किमु तद्ब्रह्मेत्यादि) तद् ब्रह्म किं वेद्यं वस्त्वन्तरं भवेत् । यस्मात् ब्रह्म ब्रह्मवेदनात् ब्रह्मज्ञानात् तत्सर्वमभवत् । अनेन ब्रह्मणोऽपि परं तदुपास्यं वस्तु विद्यते न वेत्याकारिका बुभुत्सा उपस्थापिता भवतीति ॥९॥

तद्ब्रह्मोपास्यान्तररहितमित्युत्तरं दर्शयितुमाह—

( ब्रह्म वा इदमग्रे इत्यादि ) इदं परिदृश्यमानं स्थावरजंगमात्मकं जगत् अग्रे उत्पत्तेः पूर्वं ब्रह्मैवासीत् । तत्तस्मात् आत्मानमेवावेत ज्ञातवान् किमवेत्तत्राह—

( अहं ब्रह्मास्मीति ) यस्मादहं ब्रह्मास्मीति ज्ञातवान् तस्मात्तत्सर्वमभवत् । आत्मानमेवोपास्यत्वेन ज्ञातवान् न तु अन्यदुपास्यं ज्ञातवान् । तस्मात्तत्सर्वमभवदित्यनेन वेद्यान्तरवेदनस्योपायत्वं निराक्रियते न तु स्ववेदनस्योपायत्वं प्रतिपाद्यते । यथा "स कारणं करणाधिपाधिपो न चास्य कश्चिद् जनिता न चाधिपः । स वेत्ति वेद्यं न च तस्य वेदिता तमाहुरग्र्यं पुरुषं महान्तमि"त्यादौ कारणान्तरनिषेधात् परमेश्वरस्य पर-

**तस्मात्तत् सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति । तदिदमप्येतर्हि य एवं वेदाऽहं**

मकारणत्वं सिद्धयति, तथैष प्रकृतेः उपास्यान्तरस्य निषेधात् परमेश्वरस्यैव परमोपास्यत्वं विवक्षितमिति सिद्धम् ।

( तद्य इत्यादि ) देवानामिन्द्रादीनां मध्ये यो देव इन्द्रादिः प्रत्यबुध्यत ब्रह्मज्ञानवानभूत् स एवेन्द्रादिस्तदभवत् तद्ब्रह्मसर्वमभवत् जातः ब्रह्मविषयकज्ञानवानभूत् अत्र प्रकरणे सर्वशब्दबोध्यपरमेश्वरपर्यन्ताविर्भाववान् भवति, सर्वस्वरूपपरमात्मकोऽभवत् सर्वपदार्थेन सहैकात्म्यं प्राप्तो भवतीति भावः । यद्यपि सर्वशब्दवाच्यब्रह्मणा सहैकात्म्य नित्यप्राप्तमेव, नित्यप्राप्तस्य प्राप्तव्यत्वासम्भवात्, न हि देवदत्तो देवदत्तस्वरूपं प्राप्नोति । तथापि सर्वात्मकब्रह्मणः साक्षात्कार एव ब्रह्मज्ञानवतः फलमिति ।

( तद्धैतदित्यादि ) अत्र ह शब्दो वृत्तार्थस्मरणे । तदेतत्सर्वात्मकं ब्रह्म पश्यन् तदुपासनां कुर्वन् ऋषिर्वामदेवो वामदेवनामको ऋषिः प्रतिपेदे विज्ञातवान् यदहं मनुरभवम् सूर्यश्चाभवम् मत्सदृश एव मनुसूर्यादीनामात्मेति मन्वादिना सर्वेण चेतनाचेतनेन सह स्वस्यैकात्म्यस्य साक्षात्कारं कृतवानिति भावः । एतत्सर्वात्मकपरमात्मन उपासनाफलं वामदेवोपासकस्याभवदिति ।

( तदिदमित्यादि ) एतर्हि इदानीमपि काले तदिदं ब्रह्माहमस्मीति एवं रूपेण यः कश्चिदन्योऽप्युपासको वेद जानाति सर्वात्मकब्रह्मण उपासनं करोति स तादृश एतत्कालिकपरमेश्वरोपासकोऽपि इदं सर्वं भवति । यथा पूर्वकाले सर्वात्मकब्रह्मोपासकवामदेवादीनां सर्वेण सहैकात्म्यमभवत् तथा एतत्कालिकोपासकस्यापि भवत्येव एतेन पूर्वकाले एवोपासकस्य सर्वात्मक-

ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा

ब्रह्मसाक्षात्कारो भवन्नासीत् न त्वे तत्कालिकस्येति निरस्तम्, श्रुतिप्रामाण्यादिति ।

(तस्य ह नेत्यादि ) तस्याहं ब्रह्मास्मीति परमात्मज्ञानवत उपासकस्य देवाश्च न देवा इन्द्रप्रभृतयः अभूत्यै अभूत्यर्थम् मुक्त्यैश्वर्यविघातायेत्यर्थः न कथमपि ईशते समर्था न भवन्ति यस्य देवा अपकर्तुं न समर्था भवन्ति तत्र का कथा साधारणमनुष्याणामिति । अपकर्तुं देवाः कथं नेशते तत्र कारणं दर्शयितुमाह—

( आत्मेत्यादि ) स परमात्मज्ञानवान् हि यस्मात् कारणात्, एषामिन्द्रादिदेवानामपि आत्मा नियमनकर्ता भवति ब्रह्मविद्याप्रभावेण ईशित्ववशित्वादिसिद्धिमान् देवानपि नियन्तुं समर्थो भवत्येवेत्यर्थः । एवं यथोक्तब्रह्मज्ञानादुपासकः कृतार्थो भवतीति भावः । यथोक्तक्रमेण परमात्मज्ञानवतां कृतार्थतां दर्शयित्वा ब्रह्मज्ञानरहितानां साकेताधिपतिचरणसेवारहितानामन्यदेवोपासकानामनर्थं दर्शयितुमुपक्रमते —

(अथ योन्यामित्यादि) अथ यः कश्चिदुपासकः धारकत्वनियन्तृत्वादिना स्वस्मात् अन्यां भिन्नां देवतां परमात्मरूपां उपास्ते असौ देवतारूपो धारकत्वादिगुणयुक्तात्मभूतादन्यः भिन्नः, अहं च धार्यत्वनियम्यत्वादिगुणप्रयुक्ततच्छरीरादन्यो भिन्न एवं प्रकारेणोपासनां करोति स तादृश उपासको न सम्यग् वेद अज्ञोऽनात्मवान् । यथा लोके पशुरेवं स देवानां पशुः देवानां परिचारकः किंकरो भवति ।

( यथा ह वै इत्यादि) यथा येन प्रकारेण ह वै शब्दौ प्रसिद्धार्थकौ लोके बहवोऽनेके पशवो गवादयो मनुष्यं स्वपालक भुञ्ज्युः प्रीणयन्ति

**इ वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेवैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं तदेतन्मनुष्या विद्युः ॥ १० ॥**

तत्पालनं कुर्वन्ति । तान्पशून्परिपाल्य दुग्धादिना जीविकामुपजीवन्ति । एवमेव एकैकोऽब्रह्मवित् पुरुषो देवान् भुनक्ति परिपालयति प्रीणयतीत्यर्थः । स पुरुषोऽब्रह्मवित्त्वात् यागादिकं कृत्वा इन्द्राग्निदेवसमूहान् प्रीणयन्ति, एतावानत्र विशेषः यदनेके पशव एकं स्वपालकं परिपोषयन्ति अब्रह्मवित् पुरुषस्तु एक एवानेकदेवानां किंकरो भवतीति ।

( एकस्मिन्नेव पशावित्यादि ) लोके एकस्मिन्पशौ एकपशोरपि आदीयमाने राजचौरादिना अपहरणे जाते पालकस्य पशुस्वामिनोऽप्रियं भवति दुःखमतिशयितं भवति किमु बहुषु अनेकपशूनामपहरणे तु का कथा । तस्मादेव कारणात् एषां देवानां प्रियं तन्न भवति ।

( यदेतन्मनुष्या विद्युरिति ) एतदुक्तं भवति यथा लोके स्वार्थान्धः परोपकारगन्धरहितः पुरुषः स्वोपकारप्रयोजकान् पश्वादीन कथमपि न त्यजति बलात् चौर्याद्वा तदपहरणे महद्दुःखायते, तथा देवा अपि स्वोपकारकान् ब्रह्मविद्यारहितान् पुरुषान् कथमपि न परित्यक्तुमिच्छन्ति नेच्छन्ति च ते मनुष्या ब्रह्मविद्यायां संलग्ना भवन्तु । तथात्वे सर्वसामर्थ्यविशिष्टा मनुष्या देवानां किंकरतां विहाय मुक्तिभाजो भविष्यन्तीति विचार्य मनुष्याणां ब्रह्मोपासनात्मके कार्ये बहुधा विघ्नमाचरन्ति । अतः कल्याणमिच्छता पुरुषेण विघ्नबहुलेऽपि ब्रह्मज्ञानेऽपि देवादिकृतविघ्ननिवारणाय साकेताधिपतेरर्चनादिकार्ये संलग्न एव ब्रह्मविद्याप्राप्तये प्रयत्नः करणीयः तत्प्रसादात् विघ्नजालमवधूय तिरस्कृत्य च सांसारिकप्रतिबन्धकं तत्कृपयैव साकेतवासात्मकमुक्तिमाप्नोति ॥ १० ॥

इतः पूर्वप्रकरणेन 'स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत"

**ब्रह्म वा इदमग्रआसीदेव तदेकंसन्नव्यभवत् । तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रोवरुणः**

इत्युपक्रम्य "तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्नि"रित्यादिना ब्राह्मणानामग्नीनाञ्च सृष्टिरभूदिति प्रतिपादितम् । क्षत्रियाणां ब्राह्मणादिरक्षकाणां सृष्टिं प्रतिपादयितुं 'आत्मैवेदमग्रे आसीदि'त्यादिना प्रपञ्चस्य ब्रह्मोपादनकत्वं श्रुतमपि श्रुतेरालम्याभावात् पुनः स्मारयति—

( ब्रह्म वा इदमग्रे आसीदिति ) इदं परिदृश्यमानं जडचेतनात्मकं क्षत्रियत्वादिविशिष्टं जगत् अग्रे उत्पत्तेः पूर्वम्, ब्रह्मैवासीत् तदेकमेव-क्षत्रियादिशरीरकं परमात्मतादात्म्यापन्नमेवासीत् न ततो विभक्तमिव लक्षितमभवदभूदित्यर्थः ।

( तदेकमित्यादि ) तत् पूर्वोक्तं ब्रह्म एकं सत् न व्यभवत् वैभवं न प्राप्तवत् अग्रिमसृष्टिकर्मणि सामर्थ्यविशिष्टं नाभवदित्यर्थः । न च ब्राह्मणवर्णाग्निसद्वितीयं ब्रह्म तदा एकं ब्रह्मेति कथमुच्यते इति ब्राह्मणादीनामेकत्वाविवक्षया ब्रह्मण एकत्वोपपत्तेरिति ।

( तच्छ्रेय इत्यादि ) तत् प्रकृतं ब्रह्म क्षत्रं क्षत्रियत्वजातिविशिष्टं श्रेयोऽतिशयेन श्रेष्ठं रूपं स्वशरीरभूतमत्यसृजत । क्षत्रियस्योत्पत्तिं कृतवानिति एतदेव समासोक्तं विस्तारतया प्रपञ्चयति ।

( यान्येतानीत्यादि ) देवत्रेत्यत्र सप्तम्यर्थे त्राप्रत्ययस्तेन दैवत्रा-देवेषु न्यान्येतान इन्द्रवरुणादीनि क्षत्राणि तानि ससर्जेत्यर्थः, क्षत्रियेषु इन्द्रो बलाभिमानी, वरुणो जलाभिमानी सोमश्चन्द्रः रुद्रः क्रोधाभिमानी पर्जन्यो जलाधिष्ठाता यमो मृत्युरीशान इति शब्दः क्षत्रियदेवसृष्टेः समाप्तिद्योतकः । एते एव देवाः क्षत्रिया नान्ये ।

"ब्रह्म बृहस्पतिः क्षत्रमिन्द्रो मरुतो वै देवानां विशः"इति श्रुत्यन्तरादपि इन्द्रादीनां क्षत्रियत्वम् । यद्यपि देवाः समानशीलास्तथापि तपोविशेष-

**सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात् क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि**

बलात् वर्णविशेषो न विरुद्धः । अथवा क्षत्राभिमानित्वाद् बलाधिक्यात् क्षत्रियत्वमिन्द्रादि ईशान्तानाम् स च जातिविशेषोऽतीव प्रशस्त इति ।

( तस्मात्क्षत्रात्परं नास्ती त ) यस्मात् कारणात् इन्द्रयमवरुणरुद्रादयो देवेषु श्रेष्ठाः सन्तोऽपि क्षत्रिया एव तस्मात्कारणात् क्षत्रात्परं क्षत्रियजात्याश्रेष्ठोऽन्यो नास्ति कश्चित्क्षत्रिय एव सर्वेभ्यः श्रेयानिति तदुक्तं—"विकलेपि च पर्जन्ये जीव्यते न तु भूपतौ । राज्ञः सर्वरक्षकत्वादिति ।

( तस्माद् ब्राह्मण इत्यादि ) यस्मात्कारणात्क्षत्रियः सर्वापेक्षया श्रेष्ठस्तस्मादेव कारणात् राजसूये तदाख्ययज्ञविशेषे राजकर्तृके । ब्राह्मणो ब्राह्मणोऽपि किमितरजातीयः क्षत्रियं राजजातीयकमधस्तात् उपास्ते उपविशति क्षत्रियेयापेक्षया नीचासने ब्राह्मण उपविशति भवन्नपि ब्राह्मणस्तादृश यागकाले क्षत्रियस्यैव प्राधान्यादिति । इतोऽपि क्षत्रियस्य श्रैष्ठ्यं दर्शयति ।

( क्षत्र एवेत्यादि ) क्षत्र एव तद्यशो दधाति राजसूयाख्ययज्ञसमये भूपतिना ब्रह्मन् एवं प्रकारेणामन्त्रितो ऋत्विग्ब्राह्मणो राजानं वक्ति त्वं राजन् ब्रह्मासीति श्रवणात् ब्राह्मणत्वप्रयुक्तं यद् यशस्तद् यशः राजसूयकर्मणि क्षत्रिये ब्राह्मणो दधाति यस्मात्तस्मात्क्षत्रः क्षत्रिय एव सर्वेभ्यः श्रेष्ठ इति । सर्वतो महिमातिशयप्राप्तस्यापि क्षत्रियस्य मूलकारणं ब्राह्मण एवेति दर्शयति—

(सैषा क्षत्रस्येत्यादि) यथोक्त श्रेष्ठत्वगुणयुक्तस्यापि क्षत्रस्य क्षत्रियस्य सैषा योनिर्निदानं कारणं ब्रह्मेति । इत्थं भूतस्यापि क्षत्रियस्य कारणं ब्राह्मण एव । राजसूययज्ञेपि क्षत्रियगतमाहात्म्यतिशयस्यापि ब्राह्मणाधीनत्वात् । अयमर्थः यदा राजा राजसूयं यागं करोति तदा तस्मिन्

**राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनं हिनस्ति स्वां स योनिमृच्छति स पापीयान् भवति यथा श्रेयांसं हिंसित्वा ॥ ११ ॥**

श्रेष्ठत्वं राजसूययागे तु ब्राह्मण एव ऋत्विग्भवति । स एव यागं कारयति तस्मात्साक्षात्परम्परया वा राजश्रैष्ठ्यं प्रति कारणं भवति। ब्राह्मण इति ब्राह्मणयोनिकत्वं क्षत्रियस्य सर्वथैवोपपद्यते इति । सैसेत्यत्र स्त्रीलिङ्गनिर्देशो योनिविशेषणाभिप्रायेण न तु ब्राह्मणविशेषणाभिप्राया-दिति ।

( तस्माद्यद्यपीत्यादि ) तस्मादेव कारणात् यद्यपि राजा क्षत्रियो राजसूयकर्माङ्गाभिषेकसमये परमतां श्रेष्ठतां गच्छति प्राप्नोति । तथा-प्यन्ततः कर्मविमानसमये स्वामेव योनिं स्वकारणभूतं ब्रह्म ब्राह्मणमेव-उपनिश्रयति नीचैरुपविशति याजनादिकर्म कारयितुं ब्राह्मणसमीपं गत्वा तत्र हीनतयैवोपविशति । यदस्य श्रैष्ठ्यं तदवाप्यवृत्ति न तु सर्वादिकम्। अग्रिमप्रकरणेन तदेव द्रढयति—

( य उ एनमित्यादि ) य उ यस्तु क्षत्रियो मोहात् कारणान्तराद्वा एनं स्वयोनिभूतं ब्राह्मणं कदापि हिनस्ति अपमानयति मारयति वा ब्राह्मणापमानस्यापि ब्रह्म बधत्वात् स ब्राह्मणहिंसकः क्षत्रियः स्वां योनिं स्वकीयोत्पत्तिस्थानमेव हिनस्ति कृन्ततीत्यर्थः ।

( स पापीयानित्यादि ) स यः स्वोत्पत्तिस्थानमेव विच्छनत्ति स पापीयान् भवति, अतिशयेन पापयुक्तो भवति । यथालोके श्रेयांसं जन्मना विद्यया शीलादिना प्रशस्यं पित्रादिकं हिंसित्वा हननं कृत्वा पापीयान् भवति तथैव ब्राह्मणघातकः क्षत्रियोपि नितरां पापभाग्भवतीति ॥११॥

**स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ १२ ॥**

**स नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किञ्च ॥ १३ ॥**

( स नैवेत्यादि ) स परमात्मा क्षत्रियसृष्टिकरणेनापि नैव व्यभवत् विभुत्वं न प्राप्तवान् वित्तोपार्जकस्याभावात् । ततो वित्तोपार्जकं विशं वैश्यजातीयमसृजत् वैश्यस्योत्पत्तिं कृतवानिति । एतदेव दर्शयति—

( यान्येतानीत्यादि ) यान्येतानि वक्ष्यमाणानि देवजातानि देवानां समूहाः तानि गणशः गणं गणं कृत्वा गणरूपेणेत्यर्थ आख्यायन्ते कथ्यन्ते । यथा वसवोऽष्टव्यक्तिक एको गणः, रुद्रा एकादश, आदित्या द्वादश, विश्वेदेवा विश्वाया अपत्यानि दश विश्वेदेवाः, मरुतः सप्तसंख्याकाः तदेतेषां वसुरुद्रादित्यविश्वेदेवमरुतां गणदेवतात्वप्रसिद्धेः ॥ १२ ॥

( स नैवेत्यादि ) स परमात्मा वैश्योत्पादनेनापि न व्यभवत् विभुत्वं नाऽऽप परिचारकाभावात् । ततः स परमात्मा शौद्रं वर्णं शूद्रमेव शौद्रं शूद्रजातीयकं सेवानिपुणं ब्राह्मणादीनां सेवार्थमसृजत । पूषा इय पुष्यतीति पूषा तं पूषणम् । इयं वै पृथिवी पूषा हि यस्मात् कारणात् इयं पृथिवी ।

( यदिदं किञ्च) यदिदं किञ्चित् तत्सर्वं पुष्यति पुष्णाति पृथिव्या एव सर्वकार्यपोषकत्वात् इयं पृथिव्येव पूषा । यथा अग्नीन्द्रादिकानां देवानां ब्राह्मणक्षत्रियाश्रयत्वम्, तथैव पृथिव्या अपि शूद्राश्रयत्वम् यद्वा शूद्रत्वाभिमानित्वं पृथिव्या इति ॥ १३ ॥

**स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयां-ते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात् सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यं**

( स नैव व्यभवदित्यादि ) स परमेश्वरो नैव व्यभवत् चतुर्वर्णानां सृष्टेरनन्तरमपि स्वकीयां विभूतिं न सम्यगाप्तवान् । ततः स परमात्मा श्रेयोरूपम् पूर्वं तत् श्रेयोरूपतया क्षत्रियादिकं कथितम् तदपेक्षयापि अतिशयेन श्रेयोलक्षणं धर्मं सर्वेषां नियन्तृलक्षणमसृजतोत्पादितवान् । तदेतत् धर्माख्यं श्रेयः सर्वनियन्तृतयाप्युग्रः क्षत्रस्य क्षत्रियस्यापि क्षत्रं नियामकम् । यत् यस्माद्धर्मात्परं धर्मादधिकं किमपि नास्ति तस्यैव सर्वनियन्तृत्वात् । यतो धर्मः सर्वस्यापि नियन्ता अतो धर्मेण धर्ममधिकृत्य धर्मबलेनेत्यर्थः । अथ शब्दोऽप्यर्थकः अबलीयानपि अत्यन्तदुर्बलोऽपि पुरुषो बलीयांसमतिशयेन देहादिबलसम्पन्नमपि पुरुषम् । आशंसते पराभवति । बलवानप्यधार्मिकोऽबलेनापि धर्मवता पराभूयते । लोकेऽपि दृश्यते दुर्बलस्य धनादिकमपहरन् अधार्मिको बलवानपि धर्मबलात् दुर्बलेन बाधितो भवति धर्म एव सर्वमर्यादारक्षकोऽतोऽयं सर्वेभ्यः श्रेयानिति ।

( यो वै इत्यादि ) यो वै स धर्मः क्षत्रियात् सर्वस्मादपि श्रेयोभूतः सत्यं वै तत् तत्सत्यवदनमेव सत्यधर्मयोः पर्यायित्वमेवेत्यर्थः । कथं तथा तत्राह—

( तस्मादित्यादि ) यस्मात्सत्यधर्मयोरैक्यं तस्मादेव हेतोः सत्यं वदन्तं पुरुषं शास्त्रज्ञाः लौकिका वा एवमाहुरेव कथयन्ति यदयं यद्वदति तद्धर्ममेव वदतीति । धर्मं वदन्तं वा पुरुषं शास्त्रज्ञा एवमाहुर्यदयं सत्यं वदतीति ।

( एतद्ध्येवेत्यादि ) एतत् हि एव सत्यवदनमेव एतदुभयम् सत्यरूपं

वदतीत्येतद्ध वै तदुभयं भवति ॥ १४ ॥

तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण

धर्मरूपश्च भवति । तस्मात्कारणात् सत्यवदनमेव सर्वस्याङ्गिभूतमिति ॥ १४ ॥

चातुर्वर्ण्यसृष्टिमुपसंहरन्नाह—

(तदेतद् ब्रह्मेत्यादि) तत् तस्मादेतद्ब्रह्म क्षत्रं विट् शूद्रः क्षत्रविट्शूद्रात्मकमिति । ननु कथं ब्रह्मणश्चातुर्वर्ण्यस्वरूपत्वं क्षत्रादिसृष्टेरपि कथितत्वेत्यपेक्षायामाह—

( तदग्निनैव देवेषु ब्रह्माभवत् ) स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत, तेजोरसो निरवर्तताग्निरिति सृष्टत्वेन पूर्वोक्तेनाग्निनैव विशिष्टं सद्ब्रह्माभवद् ब्राह्मणोऽभवत् अग्निरसं ब्रह्म ब्राह्मणत्वजातिमद् ब्रह्मण्यग्निद्वारा ब्राह्मणत्वमित्यग्निरूपो ब्राह्मणोऽभवत् 'ब्राह्मणोऽस्य मुखमासीदि ति श्रुत्यन्तरात् एवमिन्द्रादिनामरूपविशिष्टं ब्रह्म ।तद्द्वारेण क्षत्रियत्वजातिविशिष्टमभवत् । तथा वसुरुद्रादिविशिष्टं ब्रह्म तद्द्वारा वैश्यत्वजातिविशिष्टमभवत् । तथा पृथिवीरूपविशिष्टं ब्रह्मैव तद्द्वारा शूद्रत्वजातिमभूदितिभावः । एवं च ब्रह्मण एव तत्तद्द्वारेण तत्तज्जातिविशिष्टत्वं तत् चातुर्वर्ण्यस्वरूपत्वमुपपद्यते इति । तदेवं देवेषु अग्नीन्द्रादिषु ब्रह्मणत्वादिजातिमत्त्वमग्नीन्द्रादिप्रयोज्यमिति पूर्वमन्त्रेण दर्शयित्वा मनुष्येषु ब्राह्मणत्वादिजात्याश्रयप्रकारं ब्रह्मणो दर्शयति—

(ब्राह्मणो मनुष्येषु इत्यादि) ब्राह्मणो मनुष्येषु इत्यत्र तृतीयान्त ब्राह्मणेनेत्यस्याध्याहारः कर्तव्यः । तथा च मनुष्येषु योऽयं ब्राह्मण इति व्यवहारः स च ब्राह्मणेन । तथा मनुष्येषु क्षत्रियः क्षत्रियेण वैश्येन वैश्यः शूद्रेण शूद्रः एवं च ब्राह्मणद्वारा ब्राह्मणत्वजातिविशिष्टो ब्राह्मणो भवत् । मनुष्येषु

शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्ये-
ष्वेताभ्यां हि रूपाभ्यां ब्रह्माभवद् । अथ यो ह वा अस्माल्लो-
कात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा

क्षत्रियेण क्षत्रिय त्वजातिविशिष्टोऽभवत् । मनुष्येषु वैश्येन वैश्यत्वजाति-
विशिष्टोऽभवत् । शूद्रेण च शूद्रत्वजातिविशिष्टोऽभवदिति ।

सम्प्रति ब्राह्मणादिशूद्रान्तेषु जातिमत्सु अग्निब्राह्मणयोरेव मुख्यत्व-
मिति प्रशंसयितुमाह—

( तस्मादग्नावेवेत्यादि ) तस्माद्देवेषु देवानां मध्ये अग्नावेव अग्नि-
द्वारकं कर्म हवनादिकं कर्म कृत्वैव लोके कर्मफलमिच्छन्ते इच्छन्ति । देव-
लोकप्राप्तीच्छया अग्निनिमित्तकं हवनादिकं कुर्वन्तीत्यर्थः । मनुष्येषु मनु-
ष्याणां मध्ये मनुष्यत्वमाश्रित्य कर्मफलसम्पादनेच्छायामग्निक्रियां विनापि
ब्राह्मणे ब्राह्मणजातिप्राप्तौ तन्निमित्तकजपादिकर्मणा लोके फलमि-
च्छन्ति । कथमग्निब्राह्मणयोरेव प्राशस्त्यं तत्राह—

( एताभ्यां हीत्यादि) एताभ्यामग्निब्राह्मणलक्षणाभ्यां ब्रह्म परमात्मा
प्रथमतो विशिष्टमभवत् तदनन्तरं क्षत्रियादिस्वरूपमभवदिति । एवं प्रकारे
णात्मस्वरूपं कथयित्वा आत्मज्ञानस्यावश्यकतां दर्शयितुमाह—

( अथ यो ह वेत्यादि ) अत्राथशब्दो वाक्यान्तस्योपक्रमे । ह वै
शब्दश्च प्रसिद्धार्थकः यः कश्चित्पुरुषः स्वं लोकं तत्र लोक्यते दृश्यते इति
लोक ऊर्ध्वस्रोतोभिः सर्वदा दृश्यमानत्वात् एतादृशं स्वं लोकं स्वात्मानम-
दृष्ट्वा दर्शनसमानाकारकज्ञानेन विदित्वा अस्मात् लोकात् जन्ममरण-
सुखदुःखाद्युपप्लुतसंसारात् प्रैति गच्छति तमेनं यथोक्तमविद्वांसं स परमे-
श्वरः सर्वेषामकारणाभिन्नः स्वस्वरूपोऽपि न भुनक्ति न परिपालयति
सामीप्यादिमुक्तिभाजं न करोति तत्कस्यहेतोर्न पालयति तत्राह— अवि-
दितोऽनुपासितो यतः—

वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवं विद् महत्पुण्यं कर्म करोति तद्धास्यां ततः क्षीयत एवात्मानमेव

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति स्मृतेः।

एतदुक्तं भवति यद्यपि जडचेतनशरीरकः परमेश्वरस्यांगी सर्वस्यापि प्राणिजातस्य तथापि सर्वस्यात्मभूतोऽपि उपासनाविरहितपुरुषस्य संसारं न निवर्तयति। तत्र दृष्टान्तं दर्शयति—

(यथा वेदो वेत्यादि) यथा सर्वेषां विधिप्रतिषेधबोधनाय साधारण्येन प्रवृत्तोऽपि वेदः अननुक्तोऽनधीतोऽविचारित इत्यर्थः। पालयति विधिप्रतिषेधज्ञानवन्तं न करोति। अन्यद्वा यथा वा कर्म ज्योतिष्टोमादिकं अकृतमसम्पादितमुपकाराय न भवति। यो हि वेदमधीते यो वा ज्योतिष्टोमादिकं कर्म करोति न तु सर्वेषामुपकाराय वेदः कर्म वा तथैवोपासनाविषयीकृत एव भगवान् भक्ताय संसारविरतिलक्षणं फलं ददाति—

"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥"

एवं वदता भगवता प्रतिपन्नेभ्यः संसारराहित्यं सूचितं नत्वप्रपन्नायेति। ब्रह्मज्ञानविरहितस्य दंडमपि दर्शयति श्रुतिः।

(यदि ह वेत्यादि) यदि हेत्यत्र ह शब्दः प्रसिद्धार्थकः अनेनैवं वित् ब्रह्माज्ञानी ब्रह्मज्ञानरहितः पुरुषः यदि वा यन्निकदाचित् महदपि पुण्यं पुण्यप्रयोजकं कर्माश्वमेधराजसूयादिकमपि करोति महताऽऽयासेन संपादयति तत् हास्य कर्माश्वमेधादिकमन्ततः सुदूरं गत्वा क्षीयते नश्यति एव। "यो ह वा एतदक्षरं गार्ग्यं विदित्वाऽस्मिल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि अन्तवदेवास्य तद्भवति" तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवात्र पुण्यचितो लोकः क्षीयते इति श्रुतेः।

लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥१५॥

अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जु-

"ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ती"ति स्मृतेः । एवं चाब्रह्मविदां कर्म सर्वमपि नश्वरमेवेति तदा मनुष्यः किं कुर्यात् ? तत्राह—

( आत्मानमित्यादि ) अतो ब्रह्मविदा कृतं कर्माफलकमेव । अतः कर्मादिकं परित्यज्यात्मानमेव लोकमुपासीत, लोक्यते इति लोकः । आत्मोपासनमेव इतरत्परित्यज्य कर्तव्यमिति । आत्मोपासनां कुर्वतः कर्मक्षयो न भवतीति दर्शयति—

( स य इत्यादि ) स य उपासकं आत्मानमेव लोकमुपास्ते तदुपासनां करोति । अस्य ह्योपासकस्य पुरुषस्य कर्म ज्योतिष्टोमादिकं न क्षीयते न विनश्यति । अत्र कर्मपदमुपासनापरकमुपासनाङ्गभूतकर्मपरकं वा । यद्यपि कर्ममात्रं क्षणिकम् । तथापि तादृशपुरुषेण क्रियमाणकर्मणो यत्फलं तस्याविनाशित्वात् कर्मणोऽक्षयत्वं कथ्यते—तस्माद्ब्रह्मज्ञानादेव कारणात् स उपासको यद् यद् वस्तु कामयते इच्छति, तत्तद् वस्तु सृजते उत्पादयति परमेश्वरोपासको यदा यदिच्छति तदेव संकल्पमात्रात्तस्य तद्भवति । "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुपतिष्ठन्ते' इति श्रुत्यन्तरात् । अभिलषितं सर्वं संकल्पमात्रादेव सृजतीत्यर्थः ॥१५॥

अथात्मानमेव लोकमुपासीतेत्युक्तं तत्कथं संगच्छते ? यतो लोक-शब्दस्य प्राणिभोगस्थानपरकत्वात् । तादृशत्वमात्मनो न सम्भवतीत्याशंक्य कैमुतिकन्यायेन ब्रह्मण एव सर्वलोकत्वं दर्शयितुं प्रथमतो जीवस्य सर्वलोकत्वं समर्थयितुमाह—

(अथोऽयं वेत्यादि) अत्राथः शब्दो वाक्यान्तरकथने वै शब्दोऽवधारणे।

**होति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु**

अयमहमिति प्रत्यक्षसिद्धः आत्मा जीवः सर्वेषां भूतानां प्राणिजातानां लोक उपभोगस्थानम् । अतोऽयमेव जीवः सर्वेषामुपभोग्यो भवतीति । एतदेव सर्वमुपपाद्य दर्शयति श्रुतिः—

( स यद् जुहोतीत्यादि ) स गृहस्थावस्थायां वर्तमानो मनुष्यो यज्जुहोति देवतामुद्दिश्य संस्कृतेऽग्नौ द्रव्यत्यागपूर्वकमाहुतिं ददाति यद् यजते देवतामुद्दिश्य द्रव्यत्याग करोति तेन होमयागलक्षणेन कर्मणा देवानामिन्द्रादीनां लोको भोग्यो भवति । होमयागाभ्यां देवानामुपकारकरणात् देवभोग्यो भवतीत्यर्थः । अथ यदनुब्रूते प्रतिदिनं स्वाध्यायं करोति स्वाध्यायमधीते इत्यर्थः । तेन स्वाध्यायकर्मणा ऋषीणां वसिष्ठादीनां लोको भोग्यो भवति स्वाध्यायद्वारा ऋषीणामुपकारकरणात् तत्प्रियो भवतीत्यर्थः । अथ यत् पितृभ्यः पितापितामहप्रपितामहमातामहादिपितृभ्यः स्वधापूर्वकं पिण्डोदकादीनि पृणाति प्रयच्छति, यद्वा और्ध्वदैहिकां क्रियां करोति तथा यत् प्रजामिच्छते पुत्रादिप्रजामुत्पादयति तेनोभयप्रकारकश्राद्धप्रजोत्पादनकर्मणा पितृणां पितृपितामहादीनां लोक उपकारकः सन् भोग्यो भवति ।

(अथ यन्मनुष्यानित्यादि) अथ यन्मनुष्यानतिथीन् स्वगृहे शयनासनजलादिकप्रदानेन वासयते-निवासमर्पयति तथा एभ्योऽतिथ्यादिभ्यो गृहे वसद्भ्यो यत् अशनं चतुःप्रकारकं भोजनं ददाति प्रयच्छति तेन निवासभोजनोभयकर्मणा मनुष्याणां लोको भोग्यो भवति । वासादिना तदुपकारकरणात्तत्प्रियो भवतीत्यर्थः ।

श्वापदा वयांस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको तथाह वै स्वाय लोकायारिष्टिमिच्छेदेवं हैवं विदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमांसितम् ॥१६॥

( अथ यत्पशुभ्य इत्यादि ) अथ यत्पशुभ्यो गवादिकेभ्यो ग्राम्येभ्यो वन्येभ्यो वा तृणोदकं घासजलादिकं विन्दति लम्भयति तेभ्यो ददातीत्यर्थः तेन घासादिदानकर्मणा पशूनां गवादीनां लोको भोग्यो भवति। घासादिप्रदाने पशूनां प्रियो भवति। दृश्यतेऽधुनापि लोके एतादृशपुरुषमाह्वानमात्रेणैव पशव उपस्थिता भवन्ति तमुपकारकं मन्यमाना इति।

( यदस्य गृहेष्वित्यादि ) अस्य कर्मिणो गृहेष्वावासस्थानेषु श्वापदाः कुक्कुरमार्जारादिका वयांसि काकादिपक्षिणः आपिपीलिकाभ्य पिपीलिकापर्यन्तजीवा उपजीवन्ति कणबलिभाण्डाद्युपजीवन्ति तेन तादृशकर्मणा तेषां श्वापदादीनां लोको भोग्यो भवति। अयं गृही काकबलिप्रदानात् पक्षिणः उच्छिष्टानुच्छिष्टान्नप्रदानात् कुक्कुरादयो गृहावस्थितपात्रसंलग्नान्नात् पिपीलिकादयः स्वजीवनयात्रां सम्पादयन्तीति तेषामुपकारकरणात् एतेषामय गृही अतिशयेन प्रियो भवतु तेषामुपकारको भवतीति। एवं प्रकारेण स्वात्मनः सर्वभूतलोकत्वपरिज्ञानस्य फलं दर्शयति।

( अयं देवानामुपकारक इति ) देवादयोऽप्येनमुपकुर्वन्ति 'कृतेषु प्रतिकर्तव्य एष धर्मः सनातन." इति नियममनुस्मृत्येत्यत आह—

( यथा ह वै इत्यादि ) अत्र ह वै शब्दौ प्रसिद्धार्थकौ यथा येन प्रकारेणेह लोके पुरुषः स्वाय स्वभोगसम्पादकदेहादिकाय अरिष्टम् रिष हिंसायामिति धातोः क्त प्रत्यये रिष्टं भवति तदर्थो विनाशो न रिष्टमित्यरिष्टमविनाशमिच्छति। एवमनेनैव प्रकारेण एवं विदे आत्मनि सर्वलोकत्वज्ञानवते पुरुषाय सर्वाणि भूतानि देवमनुष्यप्रभृतिकानि एतस्यारिष्टमविनाशं कल्याणमिच्छन्ति अभिलषन्ति। यथा हि मनुष्यः स्वकीयदेहस्य

**आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान् वै कामो नेच्छंश्च नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया**

सर्वदैव कल्याणमिच्छन्ति स्वकीयभोगस्थानरक्षणपोषणादिस्वास्थ्यमिच्छन्ति । तथा देवादयः स्वोपकारस्य क्षेममिच्छन्तीति भावः । परमप्रकृतस्य परमेश्वरस्य लोकत्वमुपसंहरन्नाह—

( तद्वा एतदित्यादि तद्वा एतत्परमेश्वरस्य लोकत्वं विदितं मीमांसितम् कैमुतिकन्यायं तर्कानुगृहीतं चेति ।। १६ ।।

भगवद्भजनादिकं संसारसागरसन्तरणोपाय इति ज्ञात्वापि कस्मात्कारणात्पुरुषो जायावित्तकर्मादौ दुःखबहुले प्रवर्तमानो भवति तत्र कः प्रवर्तक इति जिज्ञासायां काम एव प्रवर्तक इति दर्शयितुं निर्णेतुं चायमुत्तरो ग्रन्थसन्दर्भ उपतिष्ठते —

( आत्मैवेदमग्रे इत्यादि ) अग्रे दारादिसम्बन्धात्पूर्वम् । इदं प्रसिद्धं दारादिजातमात्मैवासीत् नासीत्पृथक्कोऽपि पदार्थः जायादिविभागराहित्येनैकः पुरुषरूप एव स्थितोऽभवदित्यर्थः । सः एकत्वेनावस्थितः । पुरुषोऽकामयतेच्छां कृतवान् । मे मम जायाकर्माङ्गसाधनीभूता पत्नी स्यात्तदभावेऽङ्गवैकल्यात् कर्मासम्भवात् । अथ जायासम्पत्त्यनन्तरं प्रजायेय प्रजापुत्रादिरूपेणाहमेवोत्पद्येय । जायायास्तद्धि जायात्वं यदस्यां जायते पतिरितिस्मृतेः । अथानन्तरं वित्तं कर्मसाधनीभूतं दैवं मानुषं देवताज्ञानगवादिलक्षणं मे मम स्यात् । अथ तदनु नित्यनैमित्तिककाम्यात्मकं कर्म कुर्वीय करवाणीति कामनां कृतवानिति ।

(एतावान् वै काम इति सांसारिकपुरुषाणाम् एतावान्वै जायापुत्रवित्तकर्माण्येव कामः कामनाविषयः जायादिकर्मान्तव्यतिरेकेणान्यः कोऽपि कामनाविषयो न भवतीत्यर्थः ।

मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं

( नेच्छंश्च नेत्यादि ) अत्र च न शब्दोऽप्यर्थकः इच्छन् अभिलाषा-विषय कुर्वन्नपि जीवोऽतोऽस्मात् भूयोऽधिकं न विन्देत् न लभेत् । जाया-पुत्रवित्तकर्मभ्योऽधिकत्रैगुण्यनिष्ठः पुरुषः कामयमानोऽपि यतो न प्राप्नुया-दत एतावानेव काम इति कामस्यैव प्रवर्तकत्वमिति सिद्धम् ।

( तस्मादपीत्यादि ) यस्मात्कारणात्प्रजापतिरपि रमणार्थं स्त्र्यादि-विषयकेच्छां कृतवान् तस्मात् कारणात् एतर्हि अपि, इदानीमपि वर्तमान कालेऽपि एकाकी असहायः पुरुषः जाया पत्नी मे मम स्याद् भवेदिति कामयते । अथ जायाप्राप्त्यनन्तरं प्रजायेयाहमेव पुत्ररूपेण स्याम् । अथ पुत्रानन्तरं वित्तं दैवं मानुषं च मे मम स्यादिति कामयते तदनु कर्म कुर्वीय करवाणीति कामयमानो दृश्यते इति ।

(स यावदपीत्यादि) पूर्वोक्तप्रकारेण कामयमानः स कामी यावत्काल-पर्यन्तम् एतेषां जायापुत्रादीनां मध्यात् एकैकं जायादिकं न प्राप्नोति न लभते तावत्कालपर्यन्तम् अकृत्स्नोऽसम्पूर्णः एकांशहीन एवाहमित्येवं रूपेण स्वात्मानं मन्यते । यस्तु कामी वैराग्यादप्राप्तया वा जायापुत्रादिहीनतया असम्पूर्णस्तस्य कृत्स्नता संपत्तिप्रकारं श्रुतिर्दर्शयति—

( तस्यो कृत्स्नतेति ) तस्याकृत्स्नस्य पुरुषस्य कृत्स्नता वक्ष्यमाण-प्रकारेण भवतीति ।

(मन एवास्येत्यादि) अस्याकृत्स्नस्य मन एवात्मा मनसः प्रधानत्वात् । वाग्जाया । वाक् नोदनालक्षणव्यापारवती जाया पत्नी । जायेव जाया स्त्रीत्वसामान्यादिति । प्राणः प्राणः प्रजेति प्राण एव प्रजा पुत्रः प्रजा-इव प्रजा जायापतिस्थानीयाभ्यां वाङ्मनसाभ्यां प्राणस्योत्पत्तिरिति ।

**वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवं श्रोत्रेण हि तच्छृणो-त्यात्मैवास्य कर्मात्मना हि कर्म करोति स एष पांक्तो यज्ञः पांक्तः पशुः पांक्तः पुरुषः पांक्तमिदं सर्वं यदिदं किञ्च तदिदं सर्वमाप्नोति य एवं वेद ॥ १७ ॥**

## इति बृहदारण्यकोपनिषदि प्रथमाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥

( चक्षुरित्यादि ) चक्षुर्दर्शनक्रियाविशिष्टं मानुषं वित्तम् हिरण्यगवादिकं यद्वित्तं तदुपलम्भकत्वात् चक्षुषो मानुषवित्तत्वं संभवति । हि यस्मात्कारणात् चक्षुषा नेत्रेणैव हिरण्यादिकं विन्दते प्राप्नोति तस्मात् चक्षुर्मानुषं वित्तमिति । श्रोत्रं श्रवणेन्द्रियं दैवं दैवसम्बन्धिवित्तम् दैवशब्दितादृष्टप्रतिपादकश्रुत्यादि उपलम्भकत्वात् श्रोत्रं दैवं वित्तमिति । अस्य कामनावतः पुरुषस्यात्माशरीरमेव कर्म हि यस्मात्कारणात् आत्मना शरीरेणैव कर्म व्यापारमात्रं करोति सम्पादयति । एवं प्रकारेण तस्य कृत्स्नता सिद्धा भवति ।

( स एष इत्यादि ) आत्मपत्नीपुत्रवित्तकर्मलक्षणपञ्चकसम्पाद्यः स एषः पांक्तो यज्ञः स एष समुदायः पञ्चाक्षरा पंक्तिः पांक्तो यज्ञ इति निर्दिष्ट– पांक्तयज्ञात्मा पंचत्वसंख्यायाः समानत्वादिति ।

( पांक्तः पशुरिति ) पशुः पशुसाध्यो यज्ञः पशोः पांचभौतिकत्वात् पांक्तत्वम् तस्मान्मन आदिकः समुदायोपि पचत्वसंख्याविशिष्टत्वात्पांक्तः । तथा पुरुषोऽपि पांक्तः पुरुषस्य पांचभौतिकत्वेन पांक्तत्वमिति । इद परिदृश्यमानं यत्किञ्चित्तत्सर्वं पांक्तम् सर्वस्यापि पांचभौतिकत्वात् तस्मात्-मन आदि समुदायस्यापि पञ्चत्वसंख्याश्रयत्वात् पांक्तत्वं ततः पांक्तत्वपुरुषत्वपशुत्वादिदृष्टिस्तत्र करणीयेति भावः । एतत्सम्पादनस्य फलमाह–

**यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता एकमस्य साधारणं द्वे देवानभाजयत्त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत्तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न कस्मात्तानि न क्षीयन्ते**

( तदिदमित्यादि ) यः पुरुष एवं मनोवाक्प्राणचक्षुःश्रोत्रशरीरात्मकसमुदायात्मजायापुत्रवित्तकर्मरूपेण पांक्तत्वयज्ञत्वपशुत्वादिरूपेण च वेदोपासनं करोति स तादृशोपासक इदं सर्वं पांक्तशब्दबोध्यं प्राप्नोति लभते इति ।। १७ ।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये प्रथमाध्यायस्य
चतुर्थं ब्राह्मणम् ।। ४ ।।

सृष्टस्य जगतोऽद्यमानत्वेनान्नभूतस्य सप्तधा विभागं दर्शयितुं सप्तान्नब्राह्मणमुपक्रमते ।

( यत्सप्तान्नानीत्यादि ) पिता सर्वलोकानां पालकः परमेश्वरो जीवसृष्टेरनन्तरं जीवानां जीवनयात्रानिर्वाहाय । मेधया ज्ञानेन तपसा विचारलक्षणेन यत् यानि सप्तान्नानि अग्रे वक्ष्यमाणानि तानि अजनयत् उत्पादितवान्, सृष्टसर्वजीवानां रक्षणायान्नसृष्टिं कृतवानित्यर्थः । तत्र सप्तान्नमध्यादेकमन्नमस्य साधारणं सर्वसाधारणं सर्वनृजीववर्गस्य समानं तुल्यरूपमित्यर्थः । द्वे अन्ने वक्ष्यमाणहुतप्रहुतलक्षणे देवानभाजयत् विभज्य देवेभ्यो दत्तवान्, देवानुद्दिश्य तादृशमन्नद्वयं कृतवानित्यर्थः । तथा त्रीणि वक्ष्यमाणानि मनोवाक्प्राणलक्षणानि अन्नानि आत्मने जीवायाकुरुतोत्पादितवानित्यर्थः । पशुभ्यो द्विपादचतुष्पादात्मकेभ्य एकं पयोघृतलक्षणमन्नमद्यमानत्वादन्नं प्रायच्छत् वितरितवान् पितेति शेषः । ननु पयसः पेयत्वं तत्कथमस्यान्नत्वमिति पय आदीनामप्यन्नत्वे स्वयं कारणं वक्ति श्रुतिः ।

( तस्मिन्नित्यादि ) तस्मिन्पयःप्रभृतिके सर्वं यत् प्राणिति प्राण-

ऽद्य मानानि सर्वदा यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन स देवानपि गच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥१॥

यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाऽजनयत्पिता एकमस्य साधारणमितीदमेवास्य तत्सा-

चेष्टां करोति यत न प्राणिति प्राणचेष्टां न करोति तत्सर्वं तस्मिन्प्रति-ष्ठितम् अग्निहोत्रयागादौ हूयमानस्य दुग्धस्य सर्वजगत्कारणत्वेन तदधीन-त्वात्सर्वस्येति । तानि पयःप्रभृतिकान्यन्नानि सर्वदा सर्वैरुपभुज्यमानानि कस्मात्कारणात् न क्षीयन्ते इति रूपो मन्त्रः । एतदन्नं पुरुषेण सर्वदैवो-त्पाद्यमानत्वात् न तस्यात्यंतिकः क्षयो भवतीत्युत्तरमित्यभिप्रायेणाक्षयत्व-गुणविदः फलं दर्शयति ।

( यो वै इत्यादि ) यः खलु पुरुष एतामक्षितिमन्नानामक्षयकारणं स वेदोत्पाद्यमानत्वलक्षणं वेद विजानाति स पुरुषः प्रतीकेन मुखेनान्न-मत्ति । तथा स विज्ञाता पुरुषो देवानपि गच्छति देवभावमाप्नोति ऊर्जं-ममृतं चोपजीवति अमृतस्य भोक्ता च स भवतीति श्लोका मंत्रा इत्यर्थः ॥ १ ॥

तमिममर्थं स्वयमेव श्रुतिर्दर्शयति ( यत्सप्तान्नानीत्यादि ) यत्सप्ता-न्नानीत्यारभ्य प्रथमपितेत्यन्तं व्याख्येयम् मेधयेत्यारम्भ द्वितीयपितेत्यय-मंशस्तस्यैव व्याख्यानभूतः । तपसा चीयते ब्रह्म यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते । इति श्रुत्यन्तरम् । तत्र मेधया तपसा ज्ञानमयेन तपसा नामरूपात्मकसकलप्रपञ्चजनकस्य परमेश्वर-स्यान्नजनकत्वमिति प्रसिद्धमेव । यदा खलु ज्ञानलक्षणतपसा परमेश्वरः सर्वस्योत्पादकस्तदा का कथा अन्नोत्पादकत्वे तस्येति सर्वं जनयामास परमेश्वर इति ।

पूर्वोक्तसप्तान्नविनियोजकं मंत्रभागं प्रतीकग्रहणपूर्वकं व्याख्यातुमाह—

धारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतद् द्वे देवानभाजयदिति हुतञ्च प्रहुतञ्च

( एकमस्येत्यादि ) एकमस्य साधारणमितीति । अस्य भोक्तृसमुदायस्यैकमन्नं साधारणं सर्वेषां तुल्यम् । एतदेव व्याचष्टे इदमेवास्य साधारणं समानमन्नम् । किं तत् समानं तत्राह—यदिदमन्नं सर्वैः प्राणिभिः प्रतिदिनं भुज्यते । एतादृशं देवपित्रादिसर्वसाधारणमन्नमसाधारणं कुर्वतो नरस्य दोषमाह—

( स य इत्यादि ) स यः कश्चिद् व्यक्तिविशेषः सर्वप्राणिसाधारणमन्नमुपास्ते आत्मसात् कुरुतेऽदृष्टार्थकर्मप्रधानो न भवति । देवादिभ्योऽदत्वा स्वयमेव तदुपभोगं करोतीत्यर्थं, स एतादृशः पुरुषः पाप्मनः पापात् अधर्मादित्यर्थः । न व्यावर्तते न मुच्यते इत्यर्थः । कुत एवम् ? यत् एतदन्नं मिश्रं सर्वप्राणिसाधारणम् अतो देवादिभ्योऽदत्वा य एतदुपभोग करोति स पापीयान् भवति । तदुक्तम्—

"तैर्दत्तानप्रदायैभ्यो यो मुङ्क्ते स्तेन एव सः"

"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकर्मभिः ।

"भुंजते ते त्वघं पापा ये पचन्त्यात्मकारणादिति ।।"

श्रुतिरपि "केवलाघो भवति केवलादी" तस्माद्देवादिभ्यः पूर्वं निवेदयित्वा पश्चात्तदन्नं भोक्तव्यं मनुष्यैरिति ।

( द्वे देवानित्यादि ) द्वे अन्ने वक्ष्यमाणे परमेश्वरो देवानभाजयत् । देवेभ्यो दत्तवानिति तदेव व्याचष्टे ।

( हुतञ्च प्रहुतञ्च ) तत्र हुतमग्नौ हवनं प्रहुतं च हुत्वा बलिहरणम् । यद्वा हुतमौपासनं प्रहुतमग्निहोत्रादिकम् । यस्मात् हुतप्रहुते द्वे अन्ने देवेभ्यो दत्ते तस्माद्देवेभ्यो देवानुद्दिश्यैव गृहिणो जुह्वति च प्रजुह्वति । हुत्वा बलिहरणादिकं च करोति । तस्यैव पूर्वमन्त्रांशस्यापरं व्याख्यानमाह—

तद्देवेभ्यो जुह्वति च प्रजुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात्पशुभ्य एकं प्रायच्छदिति तत् पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात् कुमारं जातं घृतं वै वाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्त्यथ वत्सं

( अथो इत्यादि ) अथो इति पक्षान्तरे दर्शपूर्णमासावेव हुत-प्रहुत-नामके द्वे देवान्ने इत्याहुः । केचन—यस्मात् दर्शपूर्णमासयोर्देवान्नत्वं तस्मात्कारणात् तदतिरिक्तेष्टियाजकः काम्येष्टियजनशीलो न स्यात् न भवेत् । अथवा दर्शपूर्णमासयज्ञयोर्हुतप्रहुततया देवान्नत्वेन तत्र कियत्य-पचारे देवाः क्रुद्धा भवेयुरिति दर्शपूर्णमासयागयोरार्तिज्यं न कदाचिदपि-कुर्याद् ब्राह्मण इति । त्रीण्यात्मनेऽकुरुतेतिमन्त्रं वक्तव्यबाहुल्यादन्ते व्याख्यास्यते अतस्तदतिक्रमं कृत्वा तदुत्तरमन्त्रं प्रथमं व्याचष्टे ।

( पशुभ्य इत्यादि ) पशुभ्यश्चतुष्पादादिभ्यो यदन्नं परमेश्वरः प्रादा-त्तदन्नम् पयःसंज्ञकम् । तत्पयः पशुभ्यो दत्तमन्नं पयोरूपम् । अत-स्तत्पयः अग्रे प्रथमतो मनुष्याः पशवश्चोपजीवन्ति । पयसैव जीवनं यापयन्ति प्रथमतः । मनुष्याश्चोपजीवन्ति पय इति कथनेन पशुभ्य एवं प्रायच्छदित्यत्र पशुशब्दो द्विपात् चतुष्पात् साधारणः जरायुजमात्रस्य संग्राहक इत्यर्थः । यस्मात्सर्वे उपजीवन्ति तस्मात्कारणाज्जातं समुत्पन्नं कुमारं बालमग्रे प्रथमतो जातकर्मादिसंस्कारे घृतं पयसोविकारभूतमग्रतः प्रतिलेहयन्ति पाययन्ति इत्यर्थः । अनु तत्पश्चात् स्तनं वा धापयन्ति स्तन्यं पाययन्ति यद्वा नुशब्दः स्वल्पार्थकः जातकर्माद्यकरणे स्तनं पाययन्ति । अथ जातं वत्समतृणाद इति आहुः कथयन्ति एवं लोके दृश्यते जातवत्सम-नुलक्ष्य यदि केचित्पृच्छन्ति यद् भोः कियत्प्रमाणको वत्सो जातस्तदा वत्सस्वामी कथयति अतृणाद एव । तृणमत्तीति तृणादो न तृणादोऽतृणादः पयसैवाद्यापि वर्तते, पयोमात्राहार इति ।

अतमाहुरतृणाद इति तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदं सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्त्स सर्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति तस्मात्तानि न

( तस्मिन्सर्वमित्यादि ) तस्मिन्मनुष्यादिना उद्यमाने पयसि सर्वं प्रतिष्ठितं यत्प्राणिति चेष्टते यत् न प्राणिति न चेष्टते तत्सर्वं तत्र प्रतिष्ठितमिति एतदेव व्याचष्टे ।

(पयसि हीदं सर्वमित्यादि) यत् प्राणिति चेष्टात्मकव्यापारं करोति मनुष्यपश्वादिकं यत् न प्राणिति चेष्टात्मक व्यापारं न करोति वृक्षादिकं, तत्सर्वं पयसि प्रतिष्ठितम् । यद्यपि वृक्षादिस्थावरे पयोमूलकोपजीवन नास्ति तथापि स्थावरप्रतिष्ठाकारणभूतजलस्यापि पयस्त्वात् पयोमूलकत्वं स्थावरजंगमसाधारणमक्षतमेवेति ।

( तद्यदिदमाहुरित्यादि ) यत् केचन इदमाहुर्यत् संवत्सरं वर्षपर्यन्तं पयसा दुग्धेन जुह्वत् पयसा होमं कुर्वाणो मनुष्यः पुनरपमृत्युं जयति तत् तथा न विद्यात् किन्तु यदहरेव जुहोति पयो होमं यस्मिन्दिने एव करोति तदहस्तस्मिन्नेव दिने पुनर्मृत्युमपजयति । अयं भावः पयोहोमस्यैतादृशं माहात्म्यं यत् एकाहमात्रसाध्य पय आहुतिकरणेनैवापमृत्युं जयति न तु संवत्सरपर्यन्तपयोहोमकरणेनेति । एतत्पयोहोमज्ञानस्य फलं दर्शयति–

( य एवं विद्वानित्यादि ) यः कश्चित् एवं विद्वान् पयोहोमज्ञानवान् अन्नाद्यम् पय आज्यादिकं स्वयमत्ति तत् देवेभ्यः प्रयच्छति ददाति देवेभ्यः पय आज्यादिदानेन यत्फलं भवति, तत्फलं लभते इति । तस्मात्तानि अद्यमानानि भुज्यमानानि सर्वदापि न क्षीयन्ते विनष्टानि न भवन्ति । तत्र तस्मादिति शब्दार्थं स्वयं विवृणुते ।

**पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते यो वै तामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्म्मभिर्यद्धैतन्न कुर्य्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं**

(पुरुषो वेत्यादि) अत्र वा शब्दोऽवधारणार्थकः अक्षितिरित्यस्याक्षय इत्यर्थः। हि यस्मात् कारणात् पुरुषः परमात्मनोऽवयवत्वात् स्वयमक्षयः पुनः पुनः प्रतिदिनमन्नाद्यं जनयते जनयत्युत्पादयति तस्मात् कारणात् अद्यमानानि प्रत्यहमुपभुज्यमानान्यपि अन्नानि न क्षीयन्ते न विनष्टानि भवन्ति प्रवाहरूपेण सर्वदैवावस्थानादिति।

(यो वै तामित्यादि) यः पुरुषः एतामक्षितिमन्नानां क्षयाभावं वेद जानाति। एतत्प्रतीकग्रहणम्। तदर्थं स्वयमेव श्रुतिर्दर्शयति।

(पुरुषो वा अक्षितिरित्यादि) पुरुषोऽक्षितिः परमात्मांशत्वादक्षयः। स्वयम्। स पुरुषो धिया धिया संकल्पेन धियेत्यत्र वीप्सा। उत्पाद्यमानान्नाभिप्रायेण कर्मभिर्जनयते प्राणिनिकायानां कर्मभिः शुभादृष्टैः सहितः सन् अन्नमुत्पादयति। यद्ध यदि हि अक्षितिः पुरुषः प्रत्यहमेतत् अन्नं न कुर्यात् नोत्पादयेत् तदा अवश्यमेवान्नं क्षीयेत। परंतु प्रतिदिनमन्नकरणात्सदन्नं न क्षीयते इति। एतादृशीमक्षितिं यो वेदेत्यर्थः।

(सोऽन्नमत्तीत्यादि) स अन्नाद्यक्षितिं विद्वान्पुरुषः प्रतीकेन मुखेनान्नमदनीयमत्ति भुनक्ति। तत्र प्रतीकेनेति मन्त्रांशं विवृणोति श्रुतिः मुखं मुखमेव प्रतीकं प्रतीकपदबोध्यम्। इत्येतत् उक्तं भवतीत्यर्थः। यद्यपि अनुभवमात्रेऽप्यत्तीति प्रयोगः सम्भवति अन्नमत्ति अनुभवति तथापि मुखद्वारा भोजनप्रतीतये मुखेनान्नमत्तीति कथितम्। ततश्चान्नभोजनस्य मुखमात्रसाध्यत्वेन मुखपदं निरर्थकं न भवतीति।

(स देवानपीत्यादि) स अन्नाक्षयज्ञानवान् देवानपि गच्छति

मुखेनेत्येतत्स देवानपि गच्छति स ऊर्ज्जमुपजीवतीति प्रशंसा ॥२॥

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्र-मना अभूवन्नादर्शमन्यत्रमना अभूवं नाश्रोषमिति मनसा ह्येव

देवत्वमाप्नोति ऊर्जमन्नमुपजीवतीति । तदियं प्रशंसा प्राशस्त्यं फल-श्रुतिरित्यर्थः ॥२॥

पाठक्रममाश्रित्य जायमानः क्रमः स पाठक्रमः तथा अर्थक्रममाश्रित्य जायमानः क्रमः अर्थक्रमः, यथा अग्निहोत्रं जुहोति यवागूं पचति । अत्र क्रमात् अग्निहोत्रस्य प्राथम्यं प्राप्तं भवति । ततश्च यदि पाठक्रमात् प्रथमतोऽग्निहोत्रं क्रियेत तदा यवागूपाको नैरर्थक्यमायाति, यतो यवागूद्रव्यं होमसाधनं ततश्च यदि पाठक्रमेण होमकरणे द्रव्यस्य प्रयोजनं न स्यात् । पाठक्रमात् पश्चात्पठितमपि यवागूद्रव्यमर्थक्रममासाद्य प्रथमतो विधीयते ततो होमस्ततश्च द्वयोरपि सामञ्जस्यं भवति, तद्वत्प्रकृतेऽपीति ज्ञातव्यमिति । तदेवं पाठं क्रममनादृत्यार्थक्रममासाद्य साधनभूतमन्नचतुष्टयं व्याख्याय तदनन्तरं फलभूतमन्नत्रयं दर्शयितुं प्रतीकग्रहणपूर्वकमाह–

(त्रीण्यात्मने इत्यादि) त्रीण्यात्मनेऽकुरुत पिता परमेश्वरः त्रीणि मन आदीनि अन्यानि आत्मने जीवार्थमकुरुत व्याख्येयग्रहणमत्र तद्व्याख्यानं स्वयमाह–

(मनोवाचमित्यादि) जीवार्थं पिता कान्यन्नानि कृतवान् तत्राह– मनः संकल्पविकल्पलक्षणम् वाचं प्राणं च । तान्येतानि मनोवाक् प्राण-लक्षणानि त्रीण्यन्नानि आत्मने सर्वस्मै जीववर्गाय अकुरुत कृतवानिति । विशेषत एतद्विवरणं ब्रह्मसूत्रीयज्योतिरधिकरणे द्रष्टव्यम् । मनसो वाचः प्राणस्य च सर्वजीवं प्रति साधारण्येनोपकारकमिति दर्शयितुमाह–

(अन्यत्र मना इत्यादि) अन्यत्र मनो यस्य स अन्यत्रमनाः कश्चित्कमपि पृच्छसि यद् भो इदं दृष्टवानसि ? तदा ब्रवीति अन्यत्रमना अभूवमभवमतो

**पश्यति मनसा शृणोति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो**

नादर्शम् एव अन्यत्रमना अभूवमतो नाश्रौषं न श्रुतवानस्मि, मनसो व्यासंगदशायां विषयानुभवो न भवतीत्येवं लोकः प्रत्येति । एतावता किम् तत्राह—

(मनसा ह्येवेत्यादि) हि यस्मात्कारणात् व्यासंगादिसमये विषयानुभवो न भवति तस्मात्कारणात् मनसैव पश्यति चक्षुरिन्द्रियजन्यज्ञान सम्पादयति । मनसैव श्रृणोति श्रोत्रेन्द्रियजनितज्ञानमपि सम्पादयति । ततो दर्शनश्रवणे मनःकरणके एव निर्णीयेते । न केवलं दर्शनादिकमेव मनःकरणकं काम संकल्पादिकमपि मनःकरणकमिति दर्शयति ।

(कामस्संकल्प्य इत्यादि) तत्र कामो विषयाभिलाषः संकल्पोऽध्यवसायो विष्यविशेषावधारणलक्षणः विचिकित्सा एकाधिकरणानेकप्रकारकज्ञानविशेषलक्षणः सशयः श्रद्धा परलोकादावास्तिकबुद्धिः अश्रद्धा तद्विपरीतबुद्धिः धृतिः प्रीतिः अधृतिरप्रीतिः ह्रीर्लज्जा । धीः प्रमाणजनितं ज्ञानमात्रम् । भीर्भयम् आगामिदुःखशंकेत्यर्थः एतत्सर्वं कामादिकं भयान्तं मन एव मनःकरणकमेव । यद्यपि दर्शनादावसाधारणकारणत्वं चक्षुरादेरेव । अत एव तादृशज्ञाने चाक्षुषत्वादिव्यपदेशोऽपि भवति । तथापि मनसः सर्वत्र साम्राज्यात् ज्ञानादिमात्रं प्रति क्वचित्साक्षात् क्वचित् परम्परया साधारणकारणत्वं मनस एव । अतः सर्वं ज्ञानं मनःकरणकमेवेति भावः । एतदेव स्पष्टयितुं मनसः सद्भावे प्रमाणान्तरमपि दर्शयति ।

(तस्मादपीत्यादि) यस्मात्कारणात् चक्षुरादिव्यापारविषये पृष्ठतः पृष्ठादिप्रदेशे उपस्पृष्टो वृश्चिकादिना संस्पृष्टः पुरुषो मनसा विजानाति अनुमिनोति यदहं केनापि संस्पृष्टोऽस्मीति, तस्मात्कारणान्मन एव ज्ञानमात्रं प्रतिकरणं भवतीति । एव यथोक्तप्रकारेण मनस आत्मभोगार्थत्वं दर्शयित्वा

**मनसा विजानाति यः कश्चन शब्दो वागेव सा। एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण**

बाच आत्मभोगार्थत्वं दर्शयितुमाह।

(यः कश्चनेत्यादि) यः कश्चन शब्दो वस्तुप्रकाशलक्षणो वर्णात्मको ध्वन्यात्मको वा सा प्रकृता वागेव। ततश्च शब्दाभिवदनमेव वागिन्द्रिय-साध्योपकार इति। तत्र हेतुमाह—

(सैषेत्यादि) हि यस्मात् कारणात् सा एषा वाक् सर्वस्यान्नमायत्ता। इयत्तां प्राप्ता इयत्तां प्रकाशयितुं समर्था तस्मादियं प्रकाशिकैव न तु प्रकाश्येति। अतः परं क्रमप्राप्तं तृतीयान्नभूतस्य प्राणस्य सर्वजीवोपकारकत्व-प्रकारं दर्शयितुमाह—

(प्राणोऽपान इत्यादि) प्राणो मुखनासिकाभ्यां हृदयपर्यन्तसञ्चरण-शीलः। मूत्रपुरीषादेरपनयनात् नाभिस्थानपर्यन्तवृत्तिरपानः। प्राणापानयो-र्नियमनशीलो व्यानः, वमनादिक्रियाकारकः उदानः, भुक्तपीतादेरन्नजलादेः समीकरणात्समानः। अतः सामान्यात्मिका वृत्तिः। एतत्सर्वं प्राणादिवृत्तिजातं प्राण एव, एवं च प्राणनापानादिव्यापारद्वारा सर्वजीवोपकारक-मनोवदित्यर्थः। यद्यपि स्थावरादौ जंगमेऽपि एकेन्द्रियजीवादौ स्पष्टरूपेण मनःप्राणयोर्वृत्तिर्नोपलभ्यते, तथापि शास्त्रादनुमानादिप्रमाणेन च तत्तत्त्वं विनिश्चित्य तयोः सर्वभूतोपकारकत्वमिति भावः विशेषत एतत्तत्त्वं पञ्च-वृत्तिर्मनोवद् व्यपदिश्यते (२।४।१२) ब्रह्मसूत्रे विचारितमिति तत एव द्रष्टव्यमिति।

(एतन्मय इत्यादि) अयं शरीरेन्द्रियाध्यक्षो आत्मा जीवो वै शब्दः प्रसिद्धार्थद्योतकः। एतन्मयो मनोमयत्वादिलक्षणः। अत्र मयट् शब्दो न विकारार्थकः न हि मनसो विकारात्मकः आगमविरोधात् किन्तु प्राचुर्यार्थकः। यवमयो यज्ञ इति यथा यज्ञे इतरद्रव्यापेक्षया यवस्य प्राधान्येनोपकारकत्वं

**एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥३॥**

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥४॥**

तथा जीवस्यापि मनःप्रभृतिकः सर्वार्थसाधकतया प्रधानतयोपकारक इति जीवकार्ये प्राधान्येनोपकारको भवति । अतो जीवो मनोमयत्वादिगुणको भवति । अत्रैतत्शब्दस्य सर्वनामतया सर्वनाम्नश्च प्रकान्तपरामर्शकतया प्रक्रान्तस्य मनःप्रभृतिकस्यैव ग्रहणं भवति । एतदेव स्पष्टतया श्रुतिर्दर्शयति, श्रुतेरालक्ष्याभावात् श्रोतृहितार्थकत्वाच्च ।

(वाङ्मय इत्यादि) अयमात्मा वाङ्मयो मनोमयः प्राणमय इति । यद्यपि प्राणापेक्षया मनसः प्राथम्यं दर्शितं पूर्वस्मिन्मंत्रे । अत्र वाचः प्राथम्यं कुतः ? मनसः प्राथमिकताया एवोचितत्वात्, तथापि श्रुतेः स्वातन्त्र्यात्तथा व्यपदेशः । अथवा मनो हि मूकवत् उपकारं करोति आत्मनो वाक् तु स्पष्टरूपेण व्यवहारं प्रवर्तयति । अतोऽत्र वाचः प्राथमिकता । मनस्तु एकेन्द्रियवनस्पतिसाधारणम् तेषु न तथा विस्पष्टता यथा वाक् विशिष्ट-जीवेषु विस्पष्टता प्रतीयते । अतोऽत्र प्रकरणे वाच एव प्राथम्यं श्रुत्या प्रतिपादितम् इति ॥३॥

माहात्म्यातिशयप्राप्तवान् वाङ्-मनःप्राणान् सर्वरूपत्वेन प्रशंसयति–

(त्रयो लोका इत्यादि) त्रयो लोका भूरादिका लोका एत एव एते वाङ्मनःप्राणा एव लोकत्रयान्तर्गतजीवनिकायानां सर्वव्यवहारस्य वाङ्मनःप्राणसाध्यत्वात् वागादिरूपत्वमेव लोकानामिति । एतत्शब्द-प्रतिपाद्यमर्थमाह–

(वागेवायमित्यादि) अयं पृथिवीलक्षणो वागेव । अन्तरिक्षलोको मनोरूपः असौ द्युलोकः प्राणः तथा त्रयो वेदा ऋगादिका एत एव वाङ्मनः-प्राणात्मका एव । एतेष्वेवैतेषामन्तर्भावात् । तत्र विशेषतः कस्य किमात्म-

अयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥५॥

देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥६॥

पिता माता प्रजैत एव मन एव पिता वाङ् माता प्राणः प्रजा ॥७॥

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत् किञ्च विज्ञातं

कत्वं तद्दर्शयति वागेव ऋग्वेद वाग्रूप एव ऋग्वेदः, मनो यजुर्वेदः, प्राणः सामवेदः, वागाद्यात्मकत्वं ऋगादीनामित्यर्थ ॥४-५॥

(देवाः पितर इत्यादि) एते एव वाङ्मनःप्राणाः देवाः पितरः मनुष्याश्च । तदेव विशेषतो दर्शयति–

(वागेवेत्यादि) वागेव देवा देवरूपाः मनः पितरः प्राणो मनुष्याः ॥६॥

(पिता मातेत्यादि) एते वाङ्मनःप्राणाः पिता माता प्रजाः तत्र पितृस्थानीयत्वात् वाग्हिते नियोजनात् माता मनोरक्षकत्वात् प्राणः प्रजा पुत्रादयः प्रकर्षेण जायन्ते इति प्रजाः ॥७॥

(विज्ञातमित्यादि) एते वागादयो विज्ञातं विजिज्ञास्यमविज्ञातम्। तत्र विशेषतो यत् किञ्च यत्किञ्चिद् वस्तु विज्ञातं विस्पष्टं ज्ञातं तत् वाचो वाण्या एव रूपम् । वाग्व्यवहारात् यत् विज्ञातं तत्सर्वं वाण्या एव रूपम् तत्र कारणमाह–हि यस्मात् कारणात् विज्ञाता वाक् वाण्या विज्ञायमानाः सर्वेऽपि पदार्था वागधीनप्रकाशत्वात् वागेव ।

(वागेनं तद्भूत्वाऽवति) वाण्या विज्ञायमानं वस्तुजातम् एनं विज्ञातृ पुरुषं यदवति रक्षति तदुपकारं सम्पादयति । तद् विज्ञातं वस्तु तद् भूत्वा

**वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति ॥८॥**

**यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति ॥९॥**

**यत्किञ्चाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति ॥१०॥**

**तस्यैव वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः ॥११॥**

वाग्रूपतां प्राप्यैव । अर्थात् वाचा विज्ञातेन वस्तुना योऽयमुपकारः पुरुषस्य स सर्वोऽप्युपकारो वाण्यधीन इति सर्वत्र वाक्यमुपकारकत्वं भवतीति ॥८॥

(यत्किञ्चेत्यादि) यत् किञ्चित् विजिज्ञास्यं चिन्तनीयं तन्मनस एव रूपम् । यतो मनो विजिज्ञास्यम् । मन एव तद्भूत्वा एनमवति रक्षतीति पूर्ववदेवार्थ इति ॥९॥

(यत्किञ्चेत्यादि) यत्किञ्चिद् वस्तु अविज्ञातं तत्प्राणस्य रूपम् । यतः प्राणो ह्यविज्ञाता इन्द्रियजन्यज्ञानविषयत्वातिक्रमादिति ।

(प्राणेत्यादि) एवं पूर्वजन्मोपार्जितशुभाशुभकर्मबलादुपनतं यदुपकरोति तद्भूत्वा प्राण एवावति उपकरोतीति ॥१०॥

एवं यथोक्तप्रकारेण वागादीनां सर्वलोकवेदात्मकतया प्रशंसां कृत्वा वागादीनां त्रयाणामधिष्ठातृदेवान् दर्शयितुमाह—

(तस्यैव वाच इत्यादि) तस्यै तस्याः वाचो वागिन्द्रियस्य पृथिवी इयं गन्धाधारभूता शरीरमधिष्ठानमायतनमित्यर्थः, जिह्वादिगोलके वर्तमानं पार्थिवांशमाश्रित्य वागिन्द्रियं स्थितं भवति । अयमग्निर्ज्योतीरूपम्, ज्योतिर्मयं प्रकाशात्मकमधिष्ठातृदेवतास्वरूपम् । एतावता वागिन्द्रियस्या-

**अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनं समैतां ततः**

धिष्ठातृदेवोऽग्निरिति फलितम् । तदिति यस्मात्कारणात् वागिन्द्रियस्य पृथिवी शरीरमग्निममधिष्ठातृदेवस्तास्मात् कारणात् यावत्येव यत्र यत्र वागिन्द्रियं तावती तत्र तत्र पृथिवी वागिन्द्रियाधिष्ठानतया पृथिवी तिष्ठति । तावान् यत्र यत्र वागिन्द्रियं तत्र तत्र वागिन्द्रियाधिष्ठातृतया अयमग्नेरपि विद्यते एव, अधिष्ठानाद्यभावे आधेयावस्थानस्यासम्भवात् । व्याप्यसत्वे व्यापकसत्वस्यावश्यकत्वादेवेति ॥११॥

वागिन्द्रियस्याधिष्ठानादिकथनानन्तरं मनसस्तद्दर्शयितुमाह—

(अथैतस्येत्यादि) अथ वागिन्द्रियाधिष्ठानादिकथनानन्तरम् । एतस्य मनसो द्यौराकाशः शरीरम् आयतनम् प्रकृते द्युशब्द आकाशमात्रपरको न तु द्युलोकबोधकः अन्यथा स्वर्गलोकस्यैव मनोऽधिष्ठानतया तदितरेषांमनस्कत्वं स्यात् तन्न युक्तं लोकशास्त्रविरोधात् । अतो द्युशब्द आकाशपरक एव । तत्रापि आकाशपदं हृदयाकाशे पर्यवस्यति ततश्च हृदयं छिद्ररूपमाकाशं मनसोऽधिष्ठानमायतनमित्यर्थः ।

(ज्योतीरूपमसावादित्यः) असौ आदित्यः सूर्यो ज्योतीरूपं ज्योतिर्मयमधिष्ठातृदेवतास्वरूपं मनसः अतस्तावदेव । यत्र यत्र मनः तत्र तत्र द्यौराकाशस्तदधिष्ठानतया वर्तते तावान् तत्र तत्र प्रकाशात्मक आदित्योऽपि तदधिष्ठातृतया वर्तते एवेति । ततस्तौ अग्निसूर्यौ मिथुनं मिथुनभावं समैतामागच्छताम् । अग्न्यादित्ययोः परस्परं संयोगविशेषोऽभवदित्यर्थः । ततः उभयोरग्न्यादित्ययोर्मिथुनभावानन्तरं प्राणः पञ्चवृत्यात्मकोऽजायत समुत्पन्नोऽभूदिति । एतदुक्तं भवति । आदित्येनाधिष्ठितं मनस्तादृशमनसः प्रवृत्तेरनन्तरमग्न्याधिष्ठितवाचः प्रवृत्तिर्भवति । ततश्च वाङ्मनसोः

**प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥१२॥**

**अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व्व एव समाः**

प्रवृत्तिपूर्वकं पञ्चवृत्तिप्राणप्रयोज्या शरीरादीनां प्रवृत्तिर्भवतीति । स पूर्वोक्तान्याधिष्ठितः प्राण इन्द्रो बलादिसर्वैश्वर्यशाली इतरेन्द्रियापेक्षया प्राणबलीयस्त्वस्यानुभविकत्वात् स एष प्राणः परमैश्वर्यशाली असपत्नः सपत्नः प्रतिपक्षी तद्रहितः कः पुनः सपत्नस्तत्राह—

(द्वितीयो वै इत्यादि) सपत्नो नाम द्वितीयो यो विरोधितयोपस्थितो भवति स द्वितीय एव सपत्नः तादृश सपत्नरहितोऽयं प्राणः चक्षुरादीन्द्रियेषु मध्ये प्राणसदृश प्राणप्रतिस्पर्धी नास्ति कोऽपि सर्वस्येन्द्रियजातस्य तदधीनत्वादिति ॥१२॥

(अथैतस्येत्यादि) अथैतस्य प्रकृतस्यापो जलानि शरीरमायतनम् "प्राणा वा आप इति" श्रुत्यन्तरात्, जलसद्भावे प्राणस्य सद्भावः । जलाभावे प्राणशोषणदर्शनादाप एव प्राणिना प्राणा इति । ज्योतीरूपमसौ चन्द्र इत्यादिमन्त्रस्य पूर्ववदेवार्थो ज्ञातव्य इति ।

(त एते इत्यादि) ते उपर्युक्ता एते वाङ्मनःप्राणाः समास्तुल्या सर्वत्र जीवेषु हस्तिमशकादिहीनोत्तममध्यमेषु । यद्यपि देहस्याल्पमहत्वात् प्राणादिमात्रापि तथैव स्यात् ततश्च समत्वकथनमसङ्गतमिति, तथापि प्रदीपप्रभावत् प्राणस्यापि संकोचविकासशालित्वेनाविरोधात् । अयं भावो यथा प्रदीपप्रदीप्ता प्रभा गृहघटादिषु समप्रमाणवती घटगृहाद्यधिकरणबलेन संकोचविकासं भजते तथा प्राणादयः समाः सन्तोऽपि क्षुद्रजीववृहज्जीवादिवशेन संकोचविकासौ भजमाना भवन्तीति । सर्वे एते वाङ्मनसादयोऽनन्ताः अत्र मनःप्रभृतिषु आनन्त्यमाकल्पावस्थायित्वात् । अथवा व्यष्टिप्राणाद्यपेक्षया

सर्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्तवन्तं स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तं स लोकं जयति ॥१३॥

स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्च-

आनन्त्यमनन्तमनेकसंख्याकत्वम् । प्रत्येकप्राणादौ आनन्त्यस्यानन्त-संख्यायाश्च बाधात् । तस्मात् फलार्थिना पुरुषेण । आनन्त्यगुण-वत्वेनैव प्राणादय उपासनीया इति । सम्प्रति प्राणाद्युपासकानां कीदृशं फलं भवतीति दर्शयितुमाह–

(यो ह एतानित्यादि) स यः खलूपासकः एतान् वाङ्मनःप्राणान् अन्तवतः अन्तवत्त्वगुणविशिष्टतयोपास्ते उपासनां करोति । परिच्छिन्ना एते इति कृत्वोपासनं करोति स उपासको अन्तवन्तं परिच्छिन्नमेव लोकं भोगभूमिम् जयति प्राप्नोति । अथवा अन्तवन्तं विनश्वरं लोकं प्राप्नोति । अथ य उपासक एतान् प्राणान्तान् अनन्तान् अनन्तगुणविशिष्टतया समुपासनं करोति स उपासकोऽनन्तमाभूत-संप्लवावस्थायिनमेव लोकं भोगाधिष्ठानं जयति प्राप्नोति । अत्रानन्त-शब्दश्चिरकालस्थायित्वाभिप्रायकः भगवदुपासकातिरिक्तानां सर्वेषामन्तवत्व-फलप्राप्तेरन्यत्र श्रवणात् "अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् । देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥" इत्यादि स्मृतेः । अत्र प्राणवादे सर्वे समाः सर्वेऽनन्ता इमामेव श्रुतिमुपलभ्य प्राणबोध्य-प्राणेन्द्रियाणां विभुत्वमङ्गीकुर्वन्ति तन्न सूत्रश्रुतिविरोधात् । तथा हि अणवश्चेति सूत्रे तमुत्क्रामन्तं प्राणोऽनुत्क्रामतीत्यादि नोत्क्रान्त्यादि-श्रवणात्परिमितत्त्वं सिद्ध्यति । तथोत्क्रमणसमये पार्श्वस्थपुरुषैरनुपलभ्य-मानत्वात् प्राणानामणुत्वमेव । अनन्तानुपास्ते इत्यादिनाऽऽनन्त्यं श्रवणं तु दर्शनश्रवणाद्यनन्तकार्यविशिष्टतया तदुपासनपरकमिति ॥१३॥

(स एष संवत्सर इत्यादि) स एष संवत्सरो वाङ्मनःप्राणाद्यात्मा

**दश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्य्यतेऽप च क्षीयते सोऽमावास्यां रात्रिमेतया षोडश्या कलया सर्व्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥१४॥**

प्रजापतिः स षोडशकलः षोडशसंख्यकाः कला अवयवा यस्य स षोडशकलः संवत्सरः कलामयः तस्य प्रजापतेः रात्रयस्तिथय एव पंचदशकलाः षोडशीकला ध्रुवानित्यैव व्यवस्थिता। स प्रजापतिः रात्रिभिस्तिथिभिः कला आपूर्यतेऽपक्षीयते विनश्यति च । शुक्लपक्षे चन्द्ररूपः प्रजापतिरापूर्यते वर्द्धते । क्रमेण वर्द्धमानः पूर्णातिथौ पूर्णकलो भवति, स एव चन्द्रमाः कृष्णपक्षेऽपचीयमानकलाभिर्ह्रस्तो भवति । अन्ततोगत्वा कलैकध्रुवा अविनश्वरैव भवत्यमायाम् । षोडश्याः कलाया नाशाभावाद् ध्रुवत्वमिति । स चन्द्ररूपः प्रजापतिः । अमावास्यां रात्रिम् अमावास्यायां रात्रौ । अमा सह वसतश्चन्द्रार्कौ यस्यां स अमावास्या तस्यां रात्रौ एतया ध्रुवया षोडश्या कलया सर्वमिदं स्थूलसूक्ष्मप्राणभृत्प्राणिजातमनुप्रविश्यान्तःप्रविश्य ततः परदिवसे प्रातरित्यर्थः जायते द्वितीयया कलया संयुक्तो भवति ।

(तस्मादित्यादि) यस्मात् कारणात् चन्द्र अमावास्यारात्रौ ध्रुवया कलया अनुप्रविष्टो वर्तते, तस्मात् कारणात् एतां रात्रिमस्याममावास्यायां रात्रौ प्राणभृतो जीवस्य प्राणं न विच्छिन्द्यात् न विनाशयेत् । अपि कृकलासस्य क्षूद्रपापजन्तोः कृकलासादिजीवस्यापि वधं न कुर्यादमायां किं पुनर्बृहज्जन्तोः यद्यपि कृकलासः पापजन्तुः तद्वधेन प्रायश्चित्तं यद्वा अल्पप्रायश्चित्तं तथापि तादृशस्यापि वधो न कर्तव्योऽमायां यतः ध्रुवकलया चन्द्रस्य तत्रापि प्रविष्टत्वात् । एतदेव दर्शयति एतस्याश्चन्द्रदेवताया अपचित्यै पूजार्थम् अन्यथा चन्द्रदेवताया अपचारो भवेदिति ॥१४॥

यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवं-वित्पुरुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्य्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं

षोडशकलचन्द्रविद्यायाः फलं दर्शयितुमाह–

(यो वै संवत्सर इत्यादि) यो वै संवत्सरः प्रजापतिः षोडशकलः षोडशकलाभिर्युक्तः अयमेव स य एवं वित् षोडशकलाविज्ञानवान् पुरुषः यथा खलु चन्द्रः षोडशकलावान् तथैव षोडशकलाविज्ञानवान् पुरुषो षोडशकलाभिर्युक्तो भवतीत्यर्थः। कथं षोडशकलावत्वं पुरुषस्य तत्राह–

(तस्य वित्तमेवेत्यादि) तस्य कलाविज्ञानवतः पुरुषस्य वित्तम् गवादिकं सुवर्णरजतादिकमेव धनं पञ्चदश कलाः। वित्तमेव पञ्चदशकला-स्थानीयमित्यर्थः।

आत्मा कार्यकरणसमुदायात्मको देह एव षोडशी कला शरीरे ध्रुव-कलास्थानीयमित्यर्थः। स कलावान् पुरुषो वित्तेन गवादिनैवापूर्यते वर्धते अपक्षीयते ह्रसते। यथा चन्द्रः कलया वर्द्धते ह्रसते, तथैव कलावित् वित्तेन वर्द्धते तदभावे ह्रसते च, किन्तु षोडशकलास्थानीयदेहे न तु सर्वदा विद्यते एवेति। अत एव तदेतत् विदुषः शरीरं नभ्यं नाभिस्थानीयम् मुख्यम्। यदयमात्मा यदेतत शरीर वित्तन्तु गवादिकम् प्रधिः परिवारात्मकमुपकरणम् अरनेमिस्थानमित्यर्थः। यथा रथचक्रे नाभिः प्रधानमरादिकं तदाश्रितमुपसर्जनं तद्वदिहापि शरीरं प्रधानमधिककालावस्थायि वित्तं तु उपकारकतया शरीर-स्योपसर्जनमिति। तस्मात् यस्मात् शरीरस्य प्राधान्यं वित्तस्योपसर्जनत्वं तस्माद्यदि अद्यापि अद्यत्वेऽपि लोके दृश्यतेऽनुभूयते च। सर्वज्यानि सर्वस्वापहरणम् सर्वनाशो यथा भवति तथा जीयते नश्यति ग्लानिमपि प्राप्नोति। आत्मना शरीरेण चेत् जीवति तदा प्रधिना बाह्यपरिवारेण

**तस्माद्यद्यपि सर्वज्यानिं जीयते आत्मना चेज्जीवति प्रधिनागादित्ये-वाहुः ॥१५॥**

**अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्म्मणा। कर्म्मणा पितृ-**

अगात् पुनरपि युक्तो भवति। एवमाहुः परे पुरुषाः अयं भावः यदि कस्यचित् लुंठकेन राज्ञा वा सर्वस्वमपि अपहृतं भवति शरीरं न विनश्यति तदा पुनरपि धनपरिवारादिना युक्तो भवति। "जीवन्नरो भद्रशतानि पश्येत्" "तस्मात्प्राणान्धरिष्यामि ध्रुवो जीवति संगमः" एतत् शरीरस्यैव प्राधान्यं बाह्यवित्तादिपरिवारस्योपर्जनत्वमेवेति। यथा नाम्नावशिष्टोऽपि अमायां चन्द्रः शुक्लपक्षे कलात्मकपरिवृतः सम्पूर्णमंडलो भवति तथा कलाविज्ञानवान् कारणवशात् वित्तरहितोऽपि कलाविज्ञानसामर्थ्यात् देहपरिवारो बाह्य-वित्तादिपरिवृतो भवत्येवेति भावः ॥१५॥

वाङ्मनःप्राणानां सर्वभूतोपकारकत्वं प्रदर्श्य पुनरपि प्रकारान्तरेण सर्वभूतोपकारकत्वं दर्शयितुं प्रकरणान्तरमुपदर्शयति।

(अथ त्रयो वाव लोका इत्यादि) अत्राथ शब्दः प्रकरणान्तरसूचकः वावेति पदमवधारणार्थकम्। त्रयो लोका त्रय एव लोकाः शास्त्रप्रतिपादित-कारणेन प्राप्तियोग्याः न न्यूनाधिका वा। ते लोका ये शास्त्रसाधनार्हास्ते के कियन्त इत्यपेक्षायामाह–

(मनुष्य इत्यादि) मनुष्यलोकः पितृलोको देवलोकश्चेति। तेषां लोकानां मध्ये योऽयं मनुष्यलोकः सोऽयं पुत्रेण साधनेनैव जय्यो जेतुं योग्यः पुत्रात्मकसाधनेन साध्यो भवति नान्येन न तु तदति-रिक्तेन कर्मणा कर्मणाविद्यया वा न साधनार्हः। कर्मणा केवलेनाग्निहोत्रादि-लक्षणकर्मणैव पितृलोको जय्यो नान्येन। विद्यया काम्यविद्याविशेषेण

लोको विद्यया देवलोको । देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति ॥१६॥

अथातः सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाऽहं ब्रह्माऽहं यज्ञोऽहं लोक इति यद्वै किञ्चानूक्तं तस्य सर्व्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषां सर्व्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषां सर्वेषां लोक

देवलोको जय्यो नान्येन कर्मणा पुत्रेण वा अयं वै देवलोकः त्रयाणां लोकानां मध्ये श्रेष्ठः प्रशस्यतरः तस्मात् प्रशस्ततमं देवलोकप्रापकत्वाद्विद्यां प्रशंसन्ति विद्वांसः । अत्र देवलोकशब्दः साकेतादिभगवल्लोकपरकोऽपि भगवल्लोकस्य प्रशस्यतमत्वाद् यतो विद्या प्रशस्ततमलोकसाधनरूपा अतस्तां प्रशंसन्ति सर्वे विद्वांस इति ॥१६॥

मनुष्यलोकः केन प्रकारेण जेतुं योग्यो भवतीत्युपायप्रदर्शनार्थं प्रक्रमते ( अथातः संप्रत्तिरित्यादि ) तत्र संप्रतिपत्तिः सम्प्रदानम् संप्रतिपत्तिरित्यग्रे वक्ष्यमाणस्य कर्मणो नामधेयवचनम् अतिप्रशस्तपुत्रे । स्वकीयव्यापारसंप्रदानं पिता अनेन प्रकारेण करोति तेनैतत्कर्म संप्रतिपत्तिसंज्ञकमिति भवति । तत्संप्रदानं पुत्राय कस्मिन् काले करोति तत्राह—

( स यदेत्यादि ) स पिता यदा यस्मिन्काले प्रैष्यन्मन्यते । यदा स पिताऽरिष्टादिदर्शनादिना मरिष्यामीत्यवधारयति । अथ तदा स पिता पुत्रमनुशिष्टमाहूय स्वसमीपे उपवेश्य आह वक्ष्यमाणं कथयति । किं तत्कथयति तत्राह—

( त्वं ब्रह्मेत्यादि ) हे पुत्र त्वं ब्रह्म मया यदधीतमेतावत्कालं तत्सर्वं मयि गते त्वयैवाध्येतव्यं कदापि स्वाध्यायव्यापारो गृहाद् मा गच्छतु त्वं यज्ञः मया यस्य यस्य यज्ञादेरनुष्ठानं कृतमकृतं वा तत्सर्वं त्वयैवातः परं कर्तव्यम् । त्वं लोक इति एव क्रमेण पितुरादिष्टः पुत्र प्रत्याह प्रतिवचनं ददाति अहं ब्रह्माहं यज्ञोऽहं लोक इति पितुरुक्तं सर्वमेव स्वीकरोति । श्रुतेरालस्याभावा-

इत्येकतैतावद्वा इदं सर्वमेतन्मा सर्वं सन्नयमितोऽभुनजदिति तस्मात् पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्षणया

तदर्थं स्वयमेव श्रुतिर्दर्शयति—

( यद्वै किंचेत्यादि ) यद्वै किंचानूक्तम् अधीतमनधीतं वा मया तस्य सर्वस्य ब्रह्मेत्येकता । तस्य सर्वस्यैव ब्रह्मेति पदे एकता एकत्वम्। एतावत्कालपर्यन्तं यन्मयाधीतमनधीतं वा तत्सर्वमितः परं त्वं ब्रह्मत्वस्कर्तृको भवतु वेदाध्ययनभारस्त्वत्शिरसि मयारोप्यते इत्यर्थः । ये वै के च यज्ञाःये केचित् यज्ञा मया कृता अकृता वा तेषां सर्वेषां यज्ञ इत्येकता ते सर्वे यज्ञा इतः परं त्वयैव वानुष्ठेयाः ये वै के च लोका ये केचन लोका मया जिताः संपादिता इतः परं त्वयैव जेतव्यास्त्वत्साध्या एवेति । सर्वभारः भरिष्यता पित्रा पुत्रे समारोप्यते इत्यर्थः ।

(एतावद्वेत्यादि) एतावत् परिमाणकमेतत्सर्वं यत् गृहस्थेन कर्तव्यम् । वेदा अध्येतव्या यज्ञाः कर्तव्या लोकाश्च जेतव्याः । एतन्मा सर्वं सत् । एतत्सर्वभारं यद् मदधीनमासीत् तत्सर्वमयं पुत्रो मत्तो गृहीत्वा मा मामभुनजत् । परिपालयिष्यति । तस्मात् तदेवं प्रकारेण । अनुशिष्टमनुशासनयुक्तं पुत्रं लोक्यं लोकस्य साधनभूतम् अत एवैनं पुत्रमनुशास्ति पिता यदयं लोक्यो लोकसाधनः स्यादिति । कृतसंप्रत्तिकः पिता किं करोति तत्राह—

( स यदैवमित्यादि) स पिता यदा यस्मिन्काले एवं वित् पुत्रसमर्पितसकलभारोऽस्मात् लोकात् प्रैति शरीरमिदं परित्यजति । अथ तदा एभिरेव वाङ्मनःप्राणैः सहैव पुत्रमाविशति पुत्रं प्राप्नोतीत्यर्थः । पुत्ररूपो भूत्वा सर्वं यज्ञादिकं कर्मायमेव करोति तथा पुत्रगतं सर्वमपि कर्म परलोकं प्राप्तस्यापि पितुः स्वसम्पादितकर्मवदेवोपकारकं भवति पितृरूपत्वात्पुत्रस्येति-

कृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥१७॥

पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया

भावः। स पुत्रो यदि कदाचित् अनेन पित्रा जनकेन किंचित्किमपि कर्तव्यंकर्म अक्षणया कोणाच्छिद्रतोऽन्तरा न कृतं न सम्पादितं हीनं कर्म कृतमित्यर्थः तस्मात् कर्तव्यतारूपात् पित्राऽसम्पादितात् लोकप्राप्तिप्रतिबन्धकात्सर्वस्मात् एव सपुत्रो मुञ्चति मोचयति पित्राऽकृतं यत् तत्सर्वं स्वयमनुतिष्ठन् पूरयित्वा तस्मात् पूरणेन त्रायते रक्षति पितरं तस्मात्स पुत्रो नाम। अयं भावः अनुशिष्टः पुत्रः पित्रा यत्कर्म शास्त्रविधिहीनमपि कृतम्। तेन तस्य लोकप्राप्तौ प्रतिबन्धको जात इति पुत्रस्तत्कर्म कृत्वा पितरं रक्षितवान् इति त्राणकरणात्पुत्रो भवतीति।

( स पुत्रेणेत्यादि ) स पिता एवं लक्षणेन पुत्रेण व्यक्तशरीरोऽपि अमृत एव सन् अस्मिन्नेव लोके प्रतितिष्ठति। अनेन प्रकारेण पिता पुत्रेण मनुष्यलोकं जयति। अथैनं कृतसंप्रतिपत्तिकं पुत्रन्यस्तभारं स्वर्गलोकप्राप्तं पुण्य-कर्माणं पुरुषविशेषं एते देवाः वागादयः प्राणा अमृता अमरणधर्माण आवि-शन्ति प्रविशन्तीति ॥ १७ ॥

एतदेव विविच्य दर्शयति—

( पृथिव्यै इत्यादि ) एनं कृतसंप्रतिपत्तिकं परलोकगतं पितृरूपं पुरुषं पृथिव्यै पृथिव्याश्चाग्नेश्च दैवी वाक् आविशति प्रविशति। "एतस्यै वाचः पृथिवी शरीरं ज्योतीरूपमसौ चन्द्रः" इत्यादि प्रकरणेन वाचः पृथिव्यायतन-मग्न्यधिष्ठितत्वं च प्रतिपादितमिति तदनुसारेण पृथिव्यायतनत्वाग्न्याधिष्ठि-तत्वहेतुभ्यां दैवी वाक् परलोकगतया विशतीति भावः सा दैवी वाक् सकल-दोषरहितात्यन्त विशुद्धा। यया दैवीवाचा यद् यदेव स विद्वानात्मार्थं परार्थं

**यद्यदेव वदति तत्तद्भवति ॥१८॥**

**दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥१९॥**

**अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः सञ्चरंश्चासंचरंश्च न व्यथतेऽथो न रिष्यति स एवंवित्सर्वेषां**

वा वदति तत् तदेव भवति, शापाद्यनुग्रहसमर्था सा वाक् उक्तिमात्रेण सर्वस्य सर्वं करोतीति भावः ॥ १८ ॥

( दिवश्चैनमित्यादि ) एनं परलोकगतं पुरुषं दिवो द्यु सकाशात् आदित्याच्च दैवममोघसंकल्पकं मन आविशति । मनसो द्यु आयतनत्वादादित्याधिष्ठितत्वात् । तत् दैवं मनः स्वभावतो निर्मलम् येन मनसा अयं सर्वदा आनन्द्येव सुखवानेव भवति । अथो कदाचिदप्ययं न शोचति दुःखभाक् न भवति । तत्रामोघसंकल्पकमानन्दमात्रकारणं मनो दैवं मनः इति भावः ॥ १९ ॥

(अद्भ्यश्चैनमित्यादि) एनं कृतसंप्रतिपत्तिकं पुरुषमद्भ्यश्चन्द्रमसश्च दैवः प्राणः आविशति । यो दैवः प्राणः संचरन् गमनागमनं कुर्वन् जंगमेषु असंचरन् स्थावरेषु न व्यथते दुःखकारणेन भयेन न कथमपि युज्यते अथो न रिष्यति कदाचिदपि न विनश्यति न हिंसामापद्यते इति । तत्राप्रतिहतगमनादिकारणं हिंसानर्हः प्राणो दैवः प्राणः, अस्यानुष्ठातुर्देवताकृपया एतादृशामनोवाक्प्राणा भवन्तीति भावः । यथोक्तप्रकारेण जीवोपकारकाणां वाङ्मनःप्राणानां परलोके शक्तिविशेषं दर्शयित्वा संप्रति विदुषः फलमाह—

( स एवं विदित्वादि ) स यथोक्तैवं विद्वान् स येषां भूतानां सर्वप्राणिनामात्मा भवति । यथा एषा वागिन्द्रियादिदेवता सर्वभूतानामात्मा भवति । तत्र सर्वभूतात्मत्वम् सर्वभूतान्तर्गतिज्ञानप्रेरणासामर्थ्यमेव । ततश्च सा देवता सर्वभूतान्तर्गतिज्ञानप्रेरणासमर्था तथाऽयमपि विद्वान् भवतीति भावः ।

**भूतानामात्मा भवति यथैषा देवतैवं स यथैतां देवतां सर्व्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति ।।२०।।**

**अथातो व्रतमीमांसा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टा-**

( स यथैताभित्यादि ) यथा येन प्रकारेण एतां वागादिदेवतां सर्वाणि भूतानि सर्वे प्राणिनोऽवन्ति पूजयन्ति न कश्चितामवमानयति एवमनेनैव प्रकारेण एवं विदं विद्वांसं सर्वाणि भूतानि सर्वे प्राणिवोऽवन्ति पूजयन्ति न तु यद्येवंवित् सर्वभूतानां प्रेरकस्तदा तत्प्रेरितजन्तुना क्रियमाणं यदु शुभ कर्म तेन कर्मणा एवं विदोऽपि फलभोक्तृत्वं स्यात् प्रेरकत्वादित्याशंकामप-नेतुमाह–

( यदु किंचेत्यादि ) इमा प्रजा एवं वित् प्रेरिता यदु किंच यत् किंचित् शोचन्ति शोचयन्ति तत् प्रजाशोचयितृत्वसम्पादितं पापम् अमा-सद्यस्तत्पापम् आसां प्रजानां कर्त्रीणामेव भवति न त्वेवं विदस्तानि पापकर्माणि स्पृशन्ति कथं तानि कर्माणि न स्पृशन्ति तत्राह–

( पुण्यमेवामुमित्यादि ) अमुमधिष्ठादेवं तद्विदं च पुण्यमेव गच्छति भवति न ह वै देवान् अधिष्ठातृदेवान् पापं गच्छति, अधिष्ठातृदेवाः पुण्यभाज एव भवन्ति, न तु पापफलस्य भोक्तारो भवन्ति तादृशमहिमातिशयात् । अत-स्तद्विदोऽपि न प्रेरणकृतपापस्य सम्बन्ध इति ।। २० ।।

अस्मिन्प्रकरणे वाङ्मनःप्राणानामुपासनं सर्वसाधारणतया प्रदर्शितम्, परन्तु एषु त्रिष्वपि प्राणस्य श्रेष्ठत्वप्रदर्शनाय प्रकरणान्तरमारभमाणः प्राह–

(अथातो व्रतमीमांसेत्यादि) अथ वाङ्मनःप्राणानां साधारण्येनोपासना-प्रदर्शनानन्तरम् । यतो विचारस्य फलविशेषबोधकत्वमतोऽस्मादेव कारणात्

**न्यन्योन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्म्माणि यथाकर्म्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्धत्तस्मा-च्छ्राम्यत्येव वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेनमेव**

व्रतमीमांसा व्रतस्योपासनात्मकस्य मीमांसा विचारः प्रवर्तते । किंविषयक-मुपासनं कर्तव्यमिति विचार्यते इत्यर्थः ।

( प्रजापतिर्हेत्यादि ) प्रजापतिर्जगतः स्रष्टा कर्माणि कर्मसाधनकर्मेन्द्रियज्ञानेन्द्रियाणि ससृजे सृष्टवान् वागादीनुत्पादयामासेत्यर्थः । तानि सृष्टानि समुत्पन्नानीन्द्रियाणि अन्योन्येन परस्परम् । अस्पर्द्धन्त स्पर्धामकुर्वन् अहं वदिष्यामीति वाग् दध्रे धृतवती, नास्ति मत्तोऽन्यः समर्थ इत्याकारकमभिमानं धृतवतीत्यर्थः । अहं द्रक्ष्यामीत्याकारकमभिमानं चक्षुरकरोत् । अहं श्रोष्यामीत्याकारकं श्रोत्रमकरोत् । एवमेवान्यान्यपि कर्माणि घ्राणादीनीन्द्रियाणि यथा कर्म स्वस्वविषयविषयकमभिमानमकरोत् । तानि इन्द्रियाणि वागादीनि मृत्युर्मारकः श्रमः श्रमलक्षणो भूत्वोपयेमे वागादिसमीपं प्राप्तवानित्यर्थः । ततः श्रमरूपो मृत्युस्तानि वागादीनीन्द्रियाणि आप्नोत् प्राप्तवानित्यर्थः । ततो मृत्युस्तानि वागादीनि आप्त्वा संप्राप्य अवारुन्धत् । तदवरोधं कृतवान् । तत्तदिन्द्रियं स्वस्वकार्येऽसमर्थमकरोदित्यर्थः ।

( तस्मादित्यादि ) यस्मात् श्रमात्मकमृत्युवाप्तमिन्द्रियं तस्मात् कारणात् स्वकर्मणि प्रवृत्ता वाक् श्राम्यति श्रमं प्राप्नोत्येवेति तथा चक्षुरपि स्वकर्मणि श्राम्यति, श्रोत्रमपि श्राम्यति । अन्योन्यमीन्द्रियाणि श्रमवन्ति भवन्त्येवेति । अथ योऽयं शरीराभ्यन्तर्वर्त्तिमध्यमप्राणो मुख्यप्राणस्तमिमं मुख्यप्राणं श्रमात्मको मृत्युर्नाप्नोत् न प्राप्तवान् । ततस्तानि वागादीनि श्रान्तानि अस्माकं मध्ये कः श्रेष्ठः प्रशस्यो यः चलन् अचलन् वा श्रान्तो न जात

नाप्नोद्योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे अयं वै नः श्रेष्ठो यः सञ्चरंश्चासञ्चरंश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्व्वे रूपम- सामेति त एतस्यैव सर्व्वे रूपमभवंस्तस्मादेत एतेनाख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य

इत्येवं ज्ञातुं दध्रिरे प्रवृत्तानीति ।

( अयमित्यादि ) अयं वै मुख्यः प्राणो नः अस्माकं मध्ये श्रेष्ठः प्र शस्यः यो मुख्यः प्राणः संचरन् संचलन् असंचरन् कदापि न व्यथते श्रमं न प्राप्नोति । अथो अपि न रिष्यति न हिंस्यते । हन्त तस्मात् अस्यैव मुख्य-प्राणस्य सर्वे वयं वागादयः मुख्यप्राणातिरिक्ताः रूपं स्वरूपमसाम मुख्यप्राण-मेव प्रतिपद्येम तदधीनप्रवृत्तयो भवेम इत्यर्थः । इत्येवं प्रकारेण निश्चयं कृत्वा ते वागादयः सर्वे एतस्य मुख्यप्राणस्वरूपम् अभवन् मुख्यप्राणाधीनवृत्तिका एव ते सर्वे अभवन्निति । ( तस्मादेत इत्यादि ) यस्मात् कारणात् एते वागादिका मुख्यप्राणस्य रूपमभवन् तदधीनवृत्तिका जातास्तस्मात्कारणात् एतेन मुख्यप्राणानां नाम्नैव । एते वागादयः प्राणा इत्याख्यायन्ते प्राणा इत्ये-वोक्ता भवन्तीति । संप्रत्येवं विदः फलमाह—

( तेनेह वावेत्यादि ) यः खलूपासक एवं यथोक्तप्रकारेण प्राणं सर्वा-पेक्षया श्रेष्ठं वेद विजानाति तदुपासनं करोति । स उपासको यस्मिन्कुले समुत्पन्नो भवति तत् कुलम् तन्नाम्नैवाचक्षते विदुषो नाम्नैव तत्कुलस्य व्यप-देशो भवति कुलश्रेष्ठो भवतीत्यर्थः ।

( य उ हैवमित्यादि ) यः खलु असूयकः परोत्कर्षमसहमानः । उ शब्दोऽवधारणार्थकः, ह शब्दः प्रसिद्धार्थकः एवं विदा प्राणविज्ञानवता पुरुषेण सह स्पर्धते स्पर्धां करोति विरोधी भवति, स विरोधी अनुशुष्यति वर्तमान-शरीरे एवं शोषमुपयाति । अनुशुष्य शुष्को भूत्वा अन्ततोऽन्ते म्रियते क्रमेण

**उहैवंविदा स्पर्धतेऽनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥२१॥**

**अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादेवतं स यथैषां**

दुःखसहनं कुर्वन् मृतो भवति । इत्यध्यात्मम् । अध्यात्मं प्राणस्योपासनाप्रकार इति ॥ २१ ॥

( अथाधिदैवतमिति ) अथाध्यात्मोपासनप्रकारानन्तरमधिदैवतं देवताविषयक उपासनाप्रकारः कथ्यते इति ।

(ज्वलिष्यामीत्यादि) अहमहमेव ज्वलिष्यामि ज्वलनक्रियां करिष्यामि मत्समो नास्त्यन्यः कश्चिदिति अग्निर्ज्वलनो दध्रे धृतवानित्यर्थः । आदित्योऽहमेव तप्स्यामि तपनक्रियां सम्पादयिष्यामीति धृतवान् । अहमास्यामि प्रकाशक्रियां करिष्यामीति चन्द्रमा मनो धृतवानिति । एवं प्रकारेणान्या देवता दिगादिकाः श्रोत्राद्यभिमानिन्यो यथादैवतम् तत्तद्देवतावृत्तिमनतिक्रम्य अभिमानं कृतवत्यः ।

( स यथैषामित्यादि ) यथा एषामध्यात्मं वागादिप्राणानां मध्ये मध्यमो मुख्यप्राण एव श्रेष्ठ एवमधिदैवतम् । एनासामग्न्यादिदेवतानां मध्ये वायुरेव श्रेष्ठः सर्वापेक्षयेति । अग्न्यादिदेवतामध्ये वायोरेव श्रेष्ठत्वं कुतस्तत्र हेतुमाह—

(म्लोचन्तीत्यादि) अन्या वायुभिन्ना अग्न्यादिका देवता म्लोचन्ति अस्तं यान्ति, न वायुः कदापि अस्तमितो भवति । यद्यपि सूर्याचन्द्रमसोरुदयास्तमयौ अनुभूयेते न तु अग्नेस्तस्य सति काष्ठादिके का णोदिवारात्रं वायुवदेव विद्यमानत्वात् तथापि काष्ठादिदाह्याभावेऽग्नेरस्तमयो दृश्यते वायोस्तु अस्तमयः कदापि न भवति अहोरात्रमेकरूपत्वात् तस्मादग्निसूर्याद्यपेक्षया वायोरेव श्रेष्ठत्वमिति ।

प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः ॥२२॥

अथैष श्लोको भवति यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मं स एवाद्य स

(सैषा इत्यादि) सा एषा वायुदेवताऽनस्तमिता अस्तमयरहिता। तस्मादधिदेवेषु वायुरेव सर्वापेक्षया श्रेष्ठोऽतः स वायुरेवोपासनीयः। तत्फलमपि उदयास्तमयवर्जितमेव । यद्यपि यथा भगवान् सर्वनियन्ता सर्वथोदयास्तवर्जितो न तथा वायुः, तयोरपि प्रलयसमयेऽस्तमयत्ववर्णितत्वात् । तथापि आभूतसंप्लवपर्यन्त स्थिरत्वेनास्तमयवर्जितत्वकथनमापेक्षिकम् । अतो वायुरेवोपास्यः श्रेयस्कामैरिति ।।२२।।

(अथैष इत्यादि) अथैतस्मिन्प्रकृतविषये प्राणस्य श्रेष्ठत्वेऽयं श्लोको भवति । यतो यस्मात् वायोः सकाशात् सूर्य आदित्य उदेति उदयं प्राप्नोति । यत्र यस्मिन् वायौ स्वकार्योपरमादनन्तरमस्तं विलयं गच्छति । एतस्य श्लोकस्यार्थं श्रुतिः स्वयमेव वक्ति ।

(प्राणाद्वा इत्यदि) प्राणात् वायोः सकाशात् एषः सूर्यादिरुदेति उदयं प्राप्नोति । तथा प्राणे वायौ एवासामेति अस्तं प्राप्नोति । वायुप्रेरणाधीनत्वात्सूर्याद्युदयानामिति तं प्राणमेव देवा वागादिकाः सूर्यादयश्च धर्मं चक्रिरे प्राणस्योपासनमव श्रेयसः कारणमिति निश्चयं कृतवन्तः वायुव्रतमेवोपासितवन्तः। स एव धर्मोऽद्यापि स एव धर्मः श्वोभाविन्यपि काले स्थास्यति ।

(यद्वेत्यादि) यत् यस्मात्कारणात् एते वागादिका मुख्यप्राणम् प्राणव्रतं वायुव्रतं चामुर्हि-अमुष्मिन्काले पूर्वकाले इत्यर्थः । अध्रियन्त धृतवन्तः तत् तस्मादद्यापि एतस्मिन्कालेऽपि तदेव मुख्यप्राणोपासनं

**उ श्च इति यद्वा एतेऽमूर्ह्यं ध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्युचरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति ॥२३॥**

**इति बृहदारण्यके प्रथमेऽध्याये पञ्चमं ब्राह्मणम् ॥५॥**

वायोरुपासनं कुर्वन्ति तदेवानुतिष्ठन्तीत्यर्थः । यस्माद्वायोरेवोपासनं कृतवन्तस्तस्मादेव मे व्रत मुख्यप्राणोपासनमेव चरेदनुतिष्ठेत् नान्यस्योपासमं कुर्यादिति ।

(प्राण्याच्चापान्याच्च) उपासनाप्रारंभसमये प्राणनमपाननं च कुर्यादेव तदंगतया । न उन्मेत्यत्र उत् शब्दोऽवधारणार्थकः पाप्मा मृत्युर्मा मां नाप्नुवत् न कदाचिदपि आप्नुवत प्राप्नुयादिति बुद्धया प्राणनमपानस न च तदंगतया कुर्यादेवेति । यदि इदं प्राणोपासनम् उच्चरेत् प्रथममुपक्रमेत् आरभेदित्यर्थः । तदा समापिपयिषेत् समापनं कुर्यात् अन्तपर्यन्तं कुर्यादेव न तु तन्मध्ये विरामं कुर्यात्, मृत्युप्राप्तिभयात् । तेनानेन व्रतेन प्राणोपासनकरणेन । एतस्यै एतस्या देवतायै मुख्यप्राणदेवताया व्रतकरणेन । एतस्या एव देवतायाः सायुज्यमेकात्मकं सलोकतां मुख्यप्राणदेवतैकस्थानत्वं जयति प्राप्नोति । यः खलूपासकः प्राणव्रतम् करोति स वायोः सायुज्यं सलोकतां च प्राप्नोतीति भावः ॥२३॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये प्रथमाध्यायस्य
पंचमं ब्राह्मणं समाप्तम् ॥५॥

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ॥

Rukmini Nagpal

## प्रथमाध्याये षष्ठं ब्राह्मणम्

**अयं वा इदं नामरूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्व्वाणि नामान्युत्तिष्ठन्ति । एतदेषां सामैतद्धि सर्व्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्व्वाणि नामानि बिभर्ति ॥१॥**

**अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्व्वाणि रूपाण्यु-**

(अयमित्यादि) अयं क्रियाकारकफललक्षणमिदं जगत् नामरूपं कर्म, नामरूपकर्मात्मिकमनात्मैव । तेषामेषां नाम्नां वाक् वागिति शब्दनिर्दिष्टम् उक्थम् उत्पादनम् । कथं वाचः सकाशान्नामादीनामुत्पादनं तत्राह-

(अतो हीत्यादि) अतो वाचः सकाशादेव सर्वाणि नामानि उत्तिष्ठन्ति प्रादुर्भवन्तीति । शब्दप्रयोगस्य सर्वस्यापि वागिन्द्रियाधीनत्वात् । एतत् वागित्येतत् ऐषां नाम्ना साम समत्वमेव सामेति । तदेवोपपादयति श्रुतिः स्वयमेव ।

(एतद्धीत्यादि) एतद्धि सर्वैर्नामभिः समम् तुल्यम् । कार्यकारणयोर-भेदात् । समत्वमेव सामत्वमिति । एतत् वागित्येतत् एषां नाम्नां ब्रह्म । एतदेवोपपादयति । एतद्धीत्यादि वागित्येतत् सर्वाणि नामानि बिभर्ति । तत्र यत्त्वमेव बृहत्वरूपं ब्रह्मत्वम् बृहत्वाद् ब्रह्मेति यद्वा भर्तृत्वात्पोष-कत्वात् ब्रह्मत्वम् । नाम्नां वागिन्द्रियाधीनत्वात् वाचो ब्रह्मत्वं तत्प्रति-भवत्येवेति ॥१॥

अथ नामव्याख्यानानन्तरम् । एषां रूपाणां नीलपीतादिकानाम् चक्षुः चक्षुरिति शब्दप्रतिपाद्यं रूपसामान्यं चक्षुरुक्थम् । हि तस्मात् कारणात् सर्वाणि रूपाणि नीलादीनि उत्तिष्ठन्ति चक्षुरिन्द्रियाधीनत्वात् । एतदेषां साम सर्वैं रूपैः समम् । एतत् चक्षुरेवैतेषां रूपाणां ब्रह्म । एतदेव

**त्तिष्ठन्त्येतदेषां सामैतद्धि सर्व्वैं रूपैः सममेतदेषां ब्रह्मैतद्धि सर्व्वाणि रूपाणि बिभर्ति ॥२॥**

**अथ कर्म्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्म्माण्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्व्वैः कर्म्मभिः सममेतदेषां ब्रह्मैतद्धि सर्व्वाणि कर्माणि बिभर्ति तदेतत्त्रयं सदेकमयमात्मा एकः सन्नेतत्त्रयं**

सर्वाणि रूपाणि बिभर्त्ति । चक्षुषो रूपभरणं तद्विषयकज्ञानजनन-द्वारेणेति ॥२॥

(अथ कर्मणामित्यादि) अथ रूपव्याख्यानन्तरम् कर्मणां पुण्यपाप-शब्दितानाम् एषाम् आत्मा जीवात्मैवोक्थम् उत्पादकम् अतो जीवादेव सर्वाणि कर्माणि पुण्यपापानि उत्तिष्ठन्ति समुत्पद्यन्ते एतदयं जीव एवैषां कर्मणां साम एतदयमेवहि सर्वकर्मभिः समं समः एतदेवात्मैवैषां कर्मणां ब्रह्म सर्वाणि बिभर्त्ति । तदेतत् त्रयम् नामरूपकर्मलक्षणम् सदेक-मयमात्मा । नामरूपकर्मैतत्त्रयम् आत्मना जीवेन सहैकीभूतं भवति भेद-स्याग्रहात् अतएकमिवाभाति शास्त्रज्ञानविमुखानामिति । विवेकभाजां तु एतत् नामरूपकर्म–लक्षणत्रितयमपि त्रयमेतत् । अविवेकिनां तु एक आत्मा । तदेवत् अमृतं सत्येन छन्नम् । एतस्य अर्थं श्रुतिः स्वयमेव दर्शयति ।

(प्राणो वेत्यादि) प्राणो जीवोऽमृतम् अमृतलक्षणः अत्र प्राणशब्दो जीवबोधकः प्राणो वा आशायाभूयानिति "श्रुत्यन्तरे प्राणस्य जीवे प्रयोग-दर्शनात्। नामरूपे सत्यम् तत्र सत्यं कर्मफलम्" ऋतं पिबन्तौ सुकृतस्य लोके" इत्यादि श्रुत्यन्तरे सत्यपर्याये ऋतशब्दप्रयोगस्य कर्मफलेऽपि प्रयोगस्य दर्शनात् । अभुक्तं कर्मफलं न विनश्यति यावद्भोगभोग इत्यवश्यं भावितया सत्यमिति कथ्यते । एवं च ताभ्यां कर्मफलभूताभ्यां नामरूपाभ्यां सहितोऽयं प्राणो जीवात्मा छन्नोऽप्रकाशीकृत इव भवति व्याधकुलसंवर्द्धित-

सत्यं ताभ्यामयं प्राणश्छन्नः ॥३॥ ... तदेतदमृतं सत्येन छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥३॥

**इति बृहदारण्यके प्रथमेऽध्याये षष्ठं ब्राह्मणम् ॥६॥**

राजकुमारवत् यथा कोऽपि राजकुमारः कारणवशात् व्याधकुले निवसन् स्वकीयं राजत्वमप्रकाशीकृतमिव ज्ञातवान् तद्वत् जीवोऽयममृतमयमपि स्वकीयं रूपं कर्मफलेकाच्छादितं स्वकीयं रूपमाच्छादितमिवविजानातीति भावः । अन्ये तु प्राणशब्दः परमात्मपरकः स च परमात्मा नामरूपाभ्यां विशिष्टो भवति । एवं च तद्धेदमित्यस्योपसंहारपरकमिदं प्रकरणम् ॥३॥

इति बृहद्वारण्यकोपनिषदि आनन्दभाष्ये प्रथमाध्यायस्य
षष्ठं ब्राह्मणं समाप्तम् ॥६॥
समाप्तश्चाऽयं प्रथमोऽध्यायय:

---

## प्रथमाध्याये सप्तमं ब्राह्मणम्

**ॐ ॥ दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं**

इदमीयप्रथमाध्यायस्य चतुर्थब्राह्मणस्य सप्तममंत्रे तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते इत्यादौ परमात्मनो जगतः स्थावरजंगमस्य कारणत्वं प्रदर्शितं तत् सूत्ररूपेण दर्शितं तस्यैव सूत्रभूतवाक्यस्य विस्ताररूपेण प्रतिपादनाय परमात्मनः सर्वजगत्प्रति विस्तरशः कारणत्वप्रदर्शनाय च द्वितीयोऽध्यायोऽवतार्यते ।

(दृप्तबालाकिर्हेत्यादि) दृप्तबालाकिः तत्र दृप्तो गर्विष्ठोऽहं ब्रह्मविद्यां जानामीति अहंकारयुक्तः बलाकाया अपत्यं बालाकिः यद्वा बलाकस्यापत्यं बालाकिः दृप्तश्चासौ बालाकिश्च दृप्तबालाकिः । ह शब्दो वृत्तार्थस्य स्मारकः ।

**काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥१॥**

अनूचानोऽनुवचनसमर्थो वक्ता । अथवा "एकां शाखामधीत्य श्रोत्रियोऽध्याप्यनूचान" इति श्रुत्यन्तरात् एकमात्रशाखाध्येता । गार्ग्यो गर्गगोत्रोत्पन्नः कश्चिद् ब्राह्मण आस बभूव । स ब्राह्मणः स्वकीयपांडित्यं दर्शयितुं काशिराजस्य कस्यचित् राज्ञः सभामागतवान् आगत्य राज्ञा ब्राह्मण इति मत्वा मधुपर्कादिना पूजितः स बालाकिः काश्यां काशिराजं नामतोऽजातशत्रुम् तत्र न जातः शत्रुर्यस्य स तथा बाह्याभ्यान्तरशत्रुरहितमभिगम्याहं ते ब्रह्म परमात्मनं ब्रवाणि कथयामीत्येवं ब्राह्मण प्रोक्तवान् ततो ब्राह्मणेनैवमुक्तोऽतिशयेन प्रीतोऽजातशत्रुर्ब्राह्मणं प्रत्युवाचोक्तवान् । किमुवाच राजा ब्राह्मणं प्रति तत्राह—

( सहस्रमित्यादि ) तिएतस्यां वाचि । हे ब्राह्मण ! ब्रह्म ते ब्रवाणी वचने एव भवते गवां सहस्रं दद्मः प्रयच्छामः सर्वेऽपि ब्रह्मविदो जनक एव ब्रह्मश्रवणकर्ता जनक एव दातेति कृत्वा जनकराज्ञः समीपे एव धावन्ति गच्छन्ति । मत्सकाशं नागच्छन्ति भवन्तस्तु मत्सकाशमागता ब्रह्म श्रावयितुम् श्रावणं तु दूरे तिष्ठतु ब्रह्मते ब्रवाणीति वचननिमित्तमात्रेणैव भवते सहस्रं गवां ददामीति । वाक्यमात्रेण तोषितोऽहं गवां सहस्रं प्रयच्छामि श्रावणानन्तरं किं किं दास्यामीति न जाने । एतावत्वत्कालपर्यन्तं मत्सकाशे कोऽपि नागतवान् सर्वेऽपि जनक एव श्रोता दाता चेति मन्वानास्तत्रैव गच्छन्ति भवांस्तु मामपि दातारं श्रोतारं च मत्वा आगत इति वचनमात्रेण ददामीति । अथवा अविज्ञातं विजानतामिति श्रुतिमनुस्मरन् राजा नायं वक्तुं समर्थः "यतो वाचो निवर्तन्ते" "नायमात्मा प्रवचनेन लभ्यः" "आश्चर्योऽस्य वक्तेत्यादिश्रुत्या" परमात्मनो वचनागोचरत्वं जानन् । नायं मां वक्ष्यतीति धनार्थी अयं सहसमात्रेणागतो ब्राह्मण इत्यस्यै अवश्यं किंचिद्दातव्यमिति गवां सहस्रं पर्याप्तमित्यनादर एव केवलं सूचित इति भावः ॥१॥

**स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति ह होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा अतिष्ठाः सर्व्वेषां भूतानां मूर्द्धा राजेति वा अहमेतमुपास इति स य एतमेव-मुपास्तेऽतिष्ठाः सर्व्वेषां भूतानां मूर्द्धा राजा भवति ॥२॥**

एवं राजानंशुश्रूषुं स्वाभिमुखं ज्ञात्वा स गार्ग्य उवाच– हे राजन्! आदित्ये सूर्यमण्डले स एवासौ पुरुषः पुरुषाकारो दृष्टो भवति, तमेव पुरुषमहं ब्रह्म परमात्मानं मन्येऽतस्त्वमपि तदेव ब्रह्मोपास। आदित्यमण्डलवर्तिनं पुरुषमहं ब्रह्मेति मत्वोपासनां करोमि त्वमपि तस्यैवोपासनं ब्रह्मेति कृत्वा कुरु स पुरुष एव ब्रह्मेति। आदित्यमण्डलमध्यवर्तिनमेवार्थं ब्रह्म विजानानीति कृत्वा स अजातशत्रू राजा तस्य प्रतिवादमिव नकुर्वत् प्रोवाच, स अजातशत्रुः प्रोवाच– हे ब्रह्मणा! मा मां प्रति एतस्मिन् आदित्यमंडलवर्तिपुरुषविषये मा संवदिष्ठाः संवादं मा कार्षीः। अज्ञातविषये परस्परं संवादो भवति न तु ज्ञाते विषयेऽहं तु एनं जानामि। अर्थात् नायं पुरुषः परमात्मा य उपास्यः स्यादिति। कथमेतस्मिन्संवादो न विधेयस्तत्राह–

(अतिष्ठा इत्यादि) अत्र वै शब्दोऽवधारणे प्रसिद्धो वा। अतिष्ठाः सर्वानतीत्य तिष्ठनीत्यतिष्ठाः अयमादित्यमण्डलवर्ती पुरुषः सर्बेषां भूतानां प्राणिनां मूर्धा श्रेष्ठः राजा दीप्तिगुणयोगात्। एतैरतिष्ठात्वमूर्धत्वराजत्वादि गुणैर्युक्तमेतं पुरुषमहमुपासे उपासनां करोमि। अतोऽयं परमात्मभिन्न-तया ज्ञात एवेति तद्विषये संवादो न युक्त इति। एतस्यास्तिष्ठात्वादि-गुणयुक्तादित्यमण्डलपुरुषोपासनायाः फलं दर्शयति।

(स य एतमित्यादि) स य उपासकोऽतिष्ठात्वादिगुणयुक्तादित्य-मण्डलमध्यवर्तिपुरुषमुपास्ते तदुपासनां करोति स सर्वेषां भूतानां प्राणिनां मूर्धा श्रेष्ठः राजा दीप्तिगुणयुक्तश्च भवतीति ॥२॥

**स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्हं**

आदित्यमण्डलपुरुषस्य परमात्मतया प्रत्याख्यानं कुर्वतो राज्ञः पुरतो ब्रह्मान्तरं प्रतिपादयिष्यन् गार्ग्यः पुनराह—

( स होवाचेत्यादि ) स गार्ग्यो राजानं पुनरुवाच । हे राजन् ! य एवासौ चन्द्रे चन्द्रमंण्डले पुरुषः पुरुषाकारो दृश्यते स एव पुरुषो ब्रह्म तमेवाहं पुरुषं ब्रह्मेति कृत्वाऽहमुपासनां करोमि, त्वमपि तमेव ब्रह्मेति कृत्वोपासनं कुरु इति । एवं ब्राह्मणेनादिष्टो राजा प्राह स होवाचाजातशत्रुर्हे ब्राह्मण मा मां प्रति एतस्मिन् चन्द्रमण्डलपुरुषविषये मा संवदिष्ठाः सम्वादं मा कार्षीरज्ञाते संवादः फलवान् भवति न तु ज्ञातेऽहं तु एनं चन्द्रमण्डलस्थं पुरुषं विजानामि । अयं च बृहन् महान् पाण्डरवासाः बृहन् महान् पाण्डरं शुक्लं किरणसमुदायात्मकं वासो वस्त्रं यस्य स बृहन्पाण्डरवासाः तच्छरीरत्वात् । सोमो राजेति कृत्वाऽहमेतमुपासेऽहमेतस्योपासनां करोमि । सोमोराजा यज्ञांगभूतसोमराजशब्दितलताविशेषलक्षणलक्षितौषधिविशेषाणामीशतयेशितव्यसंबन्धप्रयोज्याभेदेनाहमेतस्योपासनां करोम्येव तत्र किमपूर्वमिव प्रतिपादितं भवतेति भावः । पूर्वोक्तगुणविशिष्टसोमोपासनस्य फलविशेषं दर्शयितुमाह—

(स य एतदेवमित्यादि) स य उपासक एतत् एवं चन्द्रमण्डलपुरुषम् सोमलताभिन्नत्वविशिष्टमुपास्ते । अहरहः प्रतिदिने सुतः प्रसुतो भवति प्रतिदिनं सोमं सुतवान् इत्यत्र कर्तरि क्तप्रत्ययविधानात् तथा अस्योपासकस्यान्नं न क्षीयतेऽन्नस्य क्षयो न भवति । अन्नात्मकसोमशब्दप्रतिपाद्यलतारूपेण चन्द्रस्योपासमत्वकथनात् अन्नस्य क्षयो न भवति, अथवा चन्द्रस्य

सुतः प्रसुतो भवति नास्यान्नं क्षीयते ।।३।।

स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ।।४।।

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा

स्वयमेव देवान्नरूपत्वात् अन्नरूपतयोपास्यस्य तस्यान्नक्षयाभावात्मकं फलमिति ।।३।।

(स होवाचेत्यादि) राज्ञा एवं निराकृतो गार्ग्यो ब्राह्मणः पुनरपि उवाच । हे राजन् ! य एवासौ विद्युति पुरुषो दृश्यते । एतमेव विद्युद्गतं पुरुषं परमात्मतयोपासे त्वमपि तस्यैव ब्रह्मबुद्धयोपासनं कुरु । इत्येवं गार्ग्येण कथितोऽजातशत्रू राजा प्रोवाच मा मामेतस्मित् विद्युति पुरुषे मा संवदिष्ठाः संवादं मा कार्षीः विद्युदन्तर्गतः पुरुषस्तेजस्वीति कृत्वाऽहमेतं विद्युत्पुरुषमुपासे तदुपासनां करोम्येव ज्ञात एवासौ मया । स यः पुरुष एतस्य विद्युत्पुरुषस्योपासनं करोति स तादृशोपासनाप्रभावात् लोके तेजस्वी भवति । तथाऽस्योपासकस्य प्रजा पुत्रादिका तेजस्विनी दीप्तियुक्ता भवतीति भावः ।।४।।

पुनरपि गार्ग्यो राजानं बोधयितुमाह–

( स होवाच गार्ग्य इत्यादि ) स होवाच गार्ग्य इत्यादीनामर्थः पूर्ववदेव । योऽयमाकाशे पुरुषः स पूर्णः पूर्णत्वादेव सर्वव्यापाररहितः प्रवर्तनं लोकान्तरादिगमनम् तद्रहितोऽप्रवर्ती । तत्र पूर्णत्वविशिष्ट-पुरुषोपासनायाः फलम् प्रजापशुपूर्णता । पूर्णत्वजनितसर्वव्यापाराराहित्या-

अहमेतमुपास इति स य एतमेवमुपास्ते पूर्य्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ।।५।।

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हा पराजिष्णुर्भवत्यन्यतस्त्यजायी ।।६।।

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह स भवति विषास-

त्मकाप्रवर्तितत्वविशिष्टपुरुषोपासनायाः फलम् सन्तानाविच्छेदः । य उपासकस्तादृशगुणविशिष्टतादृशपुरुषोपासनं करोति स प्रजा पशुभ्यां पूर्णो भवति तथा प्रवर्तित्वगुणविशिष्टस्योपासनं करोति, तस्य प्रजाविच्छेदो न भवतीति भावः ।।५।।

(स होवाच गार्ग्यः) इत्यादिकं पूर्ववत् । इन्द्रः परमेश्वरः सर्वशक्तिमानित्यर्थः वैकुण्ठोऽप्रसह्यः अपराजिता सेना न पराजिता इति अपराजिता सेना महतां गणत्वप्रसिद्धेः । एतादृशगुणविशिष्टपुरुषोपासनायाः फलं दर्शयति

(स य इत्यादि) यः पूर्वोक्तगुणविशिष्टस्योपासनं करोति स जिष्णुर्जयशीलो भवति अन्यतोभवा अन्यतस्त्याः शत्रवः तान् जेतुं शीलमस्येत्यन्यतस्त्यजायीति ।।६।।

(स होवाच गार्ग्यं इत्यादि) सप्तममंत्रोऽपि पूर्ववदेव व्याख्येयः । तत्र विषासहिः विषासहिरित्यग्नेर्नाम । विष्यते यत् हविरग्नौ तत्सर्व

हिर्हास्य प्रजा भवति ॥७॥

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपं हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोस्माज्जायते ॥८॥

स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्व्वांस्तानतिरोचते ॥९॥

भस्मसात्करणे न सहते इति विषासहिः परेषां मर्षयिता भवति तादृशोपासक इति ॥७॥

(स हो वाचेत्यादि) अष्टमो मंत्रः यः खलु जले दृश्यते पुरुषस्तमहमुपासे । इतरः प्राह स च प्रतिरूपः प्रतिबिंबः य एनमुपास्ते तस्य प्रतिरूपं सदृशमेव पुत्रकलत्रादिकमेनमुपगच्छति प्राप्नोति नत्वप्रतिरूपमागच्छति । अपि च प्रतिरूपः सदृश एव पुत्रादिरेतस्माज्जायते समुत्पद्यते नाप्रतिरूप इति अन्यत्सर्वं पूर्ववदेव व्याख्येयम् ॥८॥

(स हो वाचेत्यादि) नवममंत्रः आदर्शे काचादौ प्रकाशस्वभावे यः पुरुषो दृश्यते स रोचिष्णुर्भ्राजमानो दीप्तिस्वभाव इति यावत् । एतस्योपासको रोचिष्णु दीप्तिस्वभावो भवति प्रजापि तथैव भवति तथा स यैः सह संगच्छति संगतो भवति सर्वान्ताननतिरोचतेऽतिक्रम्य प्रकाशशीलो भवति । अन्यत्सर्वं पूर्ववदेव व्याख्येयमिति ॥९॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वं हैवास्मिंल्लोक आयुरेति नैनं पुरा कालात् प्राणो जहाति ॥१०॥

स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान् ह भवति

(स होवाचेत्यादि) दशमो मंत्रः यन्त गच्छन्तं पश्चात् शब्दोऽनुदेति प्रतिध्वनिरूपः शब्दः मूलशब्दादनन्तरमुद्गच्छति तमहमुपासे। निराकृत्य तन्मतमाह।

(मेत्यादि) मैवं वद प्रतिशब्दोऽयम् प्रतिशब्दस्य प्राणकार्यत्वादेतस्य नामासुरिति य एतादृशस्योपासनं करोति स अस्मिन् लोके सर्वं पूर्णमायुरेति शतवर्षजीवी भवति। एनमुपासकं कदाचिदपि प्राणः कालात् जीवनकालात्पूर्वं न जहाति न त्यजति अपमृत्युरेतस्य न भवतीति। अन्यत्सर्वं पूर्ववदेव व्याख्येयमिति ॥१०॥

(स होवाच गार्ग्यः इत्यादि) एकादशो मंत्रः दिक्षु पुरुष इति दिशां देवौ अश्विनीकुमारौ तौ च परस्परमवियुक्तौ अतो द्वितीयत्वेन दिक्षु पुरुषस्योपासनमुपयुज्यते। अनपगो विच्छेदरहितो दिशां परस्परविच्छेदाभावात्। उपासकस्य फलं दर्शयति

(द्वितीयवानित्यादि) तत्र द्वितीयवान् सहायवानित्यर्थः, गणो बंधुवर्गः यः उपर्युक्तं दिग्गतं पुरुषमुपास्ते स सहायवान् भवति तथा तस्य बन्धुवर्गः कदापि ततो विच्छिन्नो न भवतीति भावः। अन्यत्सर्वं

मास्माद्गणश्छिद्यते ।।११।।

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्व्वं हैवास्मिंल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ।।१२।।

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ।।१३।।

पूर्ववदेवेति ।।११।।

(स होवाचेत्यादि) द्वादशो मंत्रः योऽयं छायापुरुषः स एव ब्रह्मरूपतयोपास्यः । अहं मृत्युरूपं तमुपासे । छायाया नीलत्वं भयजनकत्वं च मृत्युरपि तथैवेति मृत्युत्वोपासनमुपपद्यते । एतदुपासको लोके पूर्णमायुराप्नोति नैनं कालात्पूर्वं कदाचिदपि मृत्युरागच्छति । रोगपीडादिरहितो यावदायुर्जीवति, न तु मध्ये मृत्युदर्शनं तस्य भवतीति भावः । अन्यत्सर्वं पूर्ववदिति ।।१२।।

(स होवाचेत्यादि) त्रयोदश मंत्रः आत्मनीत्यत्र आत्मनि शरीरादौ । अहमित्याकारकमभिमानं कुर्वाणः पुरुषविशेषः सर्वजीवसाधारणः स एव ब्रह्म तमहमुपासे इतरः प्राहः मैवमिति स आत्मन्वी । उपासक आत्मन्वी भवति प्रजापि तथैव भवतीति । अन्यत्सर्वं पूर्ववदेवेति ।

(स ह तूष्णीमित्यादि) स ह गार्ग्यः ततः परमुत्तरापरिस्फूर्त्तौ तूष्णीमवाक्शिरा आस बभूव । क्षीणब्रह्मज्ञानोऽप्रतिभोऽभविदिति भावः ।।१३।।

**स होवाचाजातशत्रुरेतावन्नू ३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥१४॥**

**स होवाचाजातशत्रुः प्रतिलोमं वै तद्यद्ब्राह्मणः क्षत्रियमुपेद्-**

(स होवाचेत्यादि) लज्जितमिव गार्ग्यं दृष्ट्वा स अजातशत्रुरुवाच । हे गार्ग्य !

(एतावन् इति) किमेतावदेव ब्रह्म त्वया ज्ञातं किंवा इतोऽधिकमपीति श्रुत्वा गार्ग्य उवाच । एतावद्धीति नेतोऽरधिकं मया ज्ञातमिति । पुनरप्यजातशत्रुराह

(हि नैतावतेत्यादि) हे गार्ग्य ! नैतावता ब्रह्मस्वरूपं विदितं ज्ञातं भवतीति । एवं राज्ञा प्रोक्तो गार्ग्योऽभिमानं परित्यज्य "अमेध्यादपि कांचनं नीचादप्युत्तमां विद्याम्" आपत्तिसमये ब्राह्मणोऽब्राह्मणादपि विद्यां गृह्णीयादित्यादि शास्त्रमनुस्मृत्य क्षत्रियादपि विद्यां ग्रहीतुकामोऽशिष्याय मे कथमुपदेक्ष्यतीति विमृश्य प्राह–

(उप त्वेत्यादि) हे राजन् ! ब्राह्मणोऽप्यहं त्वा त्वाम् उपयानि उपगच्छानीति ॥१४॥

(स होवाचेत्यादि) स अजातशत्रुर्गार्ग्यमुवाच । हे गार्ग्य ! प्रतिलोममेवैतत् विपरीतमेतदित्यर्थः, यत् ब्राह्मणो जात्या जात्या क्षत्रियमुपेयात् क्षत्रियस्य शिष्यो भवेत्, अयं क्षत्रियो मे मां ब्रह्म वक्ष्यति । अय मां ब्रह्म स्वरूपं कथयिष्यतीति । इतीच्छया क्षत्रियस्य शिष्यो भवेदिति सर्वथैवानुपपन्नमिति ।

(व्येवत्वेत्यादि) हे गार्ग्य ! त्वा त्वां विज्ञापयिष्यामि स्वरूपं ब्रह्मणः यद्यपि आचार्यो भूत्वा न पाठयिष्यामि येन ते मनसि कदाचित् ग्लानिः स्यात्, शास्त्रोल्लंघनं वा स्यात् तथापि मैत्रीबुद्धया बोधने न कापि क्षतिः

**ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषं सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोमराजन्निति स नोत्तस्थौ तं पाणिना पेषं बोधयाञ्चकार स**

प्रत्युत ब्रह्मकुलेऽपीयं विद्या प्रसरिष्यतीति भावः । स राजा एवमुक्त्वा तं बालाकिं पाणी हस्तौ आदाय गृहीत्वा ब्रह्मज्ञापनाय यस्मिन् आसने उपविष्ट आसीत् तस्मादुत्तस्थौ आसनादुदतिष्ठदित्यर्थः । तदनन्तरमजातशत्रुबालाकी उभावपि कंचित् सुप्तं शयानं पुरुषं प्रति आजग्मतुः सुप्तपुरुष समीपं गतवन्तावित्यर्थः ।

(तमेतैरित्यादि) ततः सुप्तपुरुषसमीपं गत्वा तं सुप्तपुरुषमेतैर्वक्ष्यमाणैर्नामभिः संज्ञाशब्दैः हे ब्रह्मत्पाण्डुरवासः हे सोमराजन्नित्यादिभिरामंत्रयांचक्रे बोधयामासामंत्रणं कृतवानित्यर्थः । अनेन खलु प्राणः प्रतिबोधितः यतः प्राणो वाव जेष्ठश्च श्रेष्ठश्चेति श्रुत्यन्तरे जेष्ठत्वश्रेस्ठत्वगुणेन प्राणस्य बृहत्त्वात् वृहदिति संबोधनं तस्योपयुक्तम् । तथा पांडरवासस्त्वमपि प्राणस्य धर्मः किं मे वास इति प्राणेन पृष्टे "आपोवास" इत्युत्तरे जलस्य प्राणवासस्ततया कथनात् जलस्य च शुक्लवर्णाश्रियत्वात् पांडरत्वं युक्तमेव। तथा सप्तान्नब्राह्मणे "अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्र" इत्यादि श्रुतौ प्राणस्य चन्द्रसम्बन्धप्रतीतेर्लक्षणाद्वारेण सोमेति पदेन प्राणस्य संबोधनम् । एवं "प्राणो वै सम्राट्" इति श्रुते राजन् इत्यपि संबोधनं प्राणस्य संभवति । तदेवमेतैर्नामभिरिति यदुक्तं तत्प्राणसंबोधनमेवेति भावः ।

(स नोत्तस्थावित्यादि) एवं यथोक्तप्रकारेण प्राणमुद्दिश्यामंत्रणे कृतेऽपि स सुप्तपुरुषो नोत्तस्थौ निद्रां नैव तत्याज । ततस्तं सुप्तं पुरुषं पाणिना पेषं पाणिद्वारा संस्पर्शनेन बोधयांचकार, तत्पश्चात् स सुप्तपुरुष उत्तस्थौ उदतिष्ठत् निद्रामपनीय प्रतिबुद्धोऽभवत् । स्वप्नसमये प्राणनाम्ना

होत्तस्थौ ॥१५॥

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥१६॥**

आमन्त्रणे कृतेऽपि नोत्तस्थाविति ज्ञायते यत् आत्मा प्राणभिन्नः यद्यपि स्वप्नसमये व्यापाररहितदेहेन्द्रियादिभ्यः पार्थक्यमात्मनोऽतिस्थूलमेव किन्तु व्यापारविशिष्टप्राणस्य स्वपनसमऽपि सत्वात् इति प्राणभिन्नत्वं जीवस्य ज्ञापनीयमिति प्राणनाम्ना आमंत्रणे कृतेऽपि उत्थानादर्शनात् हस्तस्पर्शनेनोत्थानदर्शनादन्वयव्यतिरेकाभ्यां जीवात्मनः प्राणभिन्नत्वं प्रदर्शितं भवतीति भावः ॥१५॥

यथोक्तप्रकारेण शरीरेन्द्रियमनः प्राणव्यतिरिक्तत्वं जीवात्मनो दर्शयित्वा जीवादपि भिन्नं परमात्मनं प्रकरणप्रतिपाद्यं दर्शयितुमुपक्रमते—

( स होवाचाजातशत्रुरित्यादि ) षोडशमंत्रः । एवं प्राणव्यतिरिक्तत्वं जीवस्य दर्शयित्वा स राजाऽजातशत्रुरुवाच प्रोक्तवान् बालाकिं प्रति । हे गार्ग्य ! यत्र यस्मिन् काले एष जीवः एतत्सुप्तोऽभूत् स्वप्नं प्राप्तोऽभूत् । ईदृशं स्वप्नदर्शनं विद्यते यस्य स एतत्सुप्तो जीवः स यदा सुप्तोऽभवत् क्व एषः कस्मिन्स्थाने विज्ञानमय एष पुरुषः यः प्रबुद्ध्यमान एव सर्वेन्द्रियार्थविज्ञानमयतयोत्तिष्ठति । स पुरुषोऽजीवो हस्तपेषणोत्थापनात् पूर्वं स्वप्नदशायां कुत्र स्थितोऽभूत् । तथा एतत् एतस्मिन्काले कुतः कस्मात् स्थानात् आगात् उद्गत आगतवान् । स्वप्नसमये जीवः कुत्रासीत् कुतश्चागतः पुनरिति भावः ।

(तदु ह नमेने गार्ग्य इति) एवं जीवस्य प्रवेशनिर्गमने पृष्टे स गार्ग्यो न मेने नैव विज्ञातवान् सुषुप्तिसमये कुत्र जीवो गच्छति प्रबुद्ध्यमानः कस्मादागच्छतीति राज्ञोक्तं न ज्ञातवानिति । अत्र उशब्दोऽवधारणार्थको ह शब्दश्च पूर्ववत् वृत्तार्थस्मारक इति ॥१६॥

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत**

( स होवाचाजातशत्रुरित्यादि ) स अजातशत्रुरविज्ञातमिव गार्ग्यं ज्ञात्वा पुनरप्युवाच तं बोधयितुम् । हे गार्ग्य ! यत्र एष जीवः सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः स एषां प्राणानामिन्द्रियाणां विज्ञानमिन्द्रियजनितरूपादिज्ञानम् विज्ञानेन मनसा सहादाय गृहीत्वा य एषऽन्तर्हृदये हृदयमध्ये विद्यमान आकाशः परमात्मा तस्मिन् परमात्मनि जीवः शेते तेन परमात्मनैकतापन्नो भवति । एकत्वं च देवत्वाद्यात्मकभेदकाकारास्फुरणम् । य एषोऽन्तर्हृदयाकाश इत्यत्राकाशशब्दः परमात्मवाचको न तु भूताकाशपरकः सूक्ष्मप्रदेशे तदवस्थानासम्भवात् । किंच "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशो ह वै नामरूपयोनिर्वहिता" इत्यादिश्रुतीनां "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुत्या स हैकवाक्यत्वे आकाशपदस्य परमात्मवाचकत्वप्रसिद्धेः भूताकाशपरत्वे प्रकरणमिदं समंजसं न स्यात् । अपि च "अथास्मिन् प्राणे एवैकधा भवति" प्राणशब्दितस्य सुषुप्त्याधारत्वश्रवणात् । अत एव प्राणस्तथात्वानुगमादिति सूत्रेऽपि प्राणपदस्य परमात्मपरत्वस्य बोधनात् । प्राणाकाशशब्दयोः श्रौतनिर्वचनानुसारेण परमात्मपरत्त्वेन सामंजस्यसंभवे तत्परित्यागार्थान्तरकल्पनयोरनुचितत्वात् । तथा "सता सोम्य तदा सम्पन्नो भवति" इति सुषुप्तिसमये जीवस्य ब्रह्मसम्पत्तेः श्रुत्यन्तरसिद्धत्वाच्चाकाशपदस्य प्रकृते परमात्मैवार्थ इति । तानीन्द्रियाणि यदाप्यस्मिनन्काले विज्ञानमयो गृह्णाति स्वस्थानेभ्यो यदायं संहरति इन्द्रियजन्यज्ञानानुकूलप्रयत्नवान् यदा न भवति । तथानन्तरमेवायं पुरुषो विज्ञानमयः स्वपितिनाम भवति तस्मिन्काले पुरुषः स्वपितीतिशब्दस्तत्र प्रयुज्यते इति ।

एव प्राणो भवति गृहीता वाग् गृहीतञ्चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥१७॥

**स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो**

(तद्गृहीत इत्यादि) तत्तदा तस्मिन् काले प्राणः प्राणेन्द्रियो न तु मुख्यप्राणः इन्द्रियप्रकरणत्वात् । तेन विज्ञानमयेन गृहीत एव भवति वाग् वागिन्द्रियं विज्ञानमयेन गृहीतं भवति । उपरतव्यापारं वागिन्द्रियं भवतीत्यर्थः, गृहीतं चक्षुश्चक्षुरिन्द्रियं तदा तेन गृहीतं भवति उपरतव्यापारकं भवति तथा तदा विज्ञानमयेन श्रोत्रं श्रोत्रेन्द्रियं गृहीतमुपरतव्यापारकं भवति । एवं मनोऽपि गृहीतं विज्ञानमयेन भवति तदपि उपरतव्यापारकं भवति । अत एव सर्वेन्द्रियाणामुपरमात् चक्षुषादिविज्ञानं न भवतीति ॥१७॥

सुषुप्त्यवस्थायाः स्वप्नापेक्षया वैलक्षण्यं दर्शयितुं प्रथमतः स्वप्नावस्थां दर्शयितुमाह—

(स यत्रैतदित्यादि) स एषः प्रकृतो विज्ञानमयो जीवो यदा यस्मिन्काले स्वप्नया स्वप्नावस्थयाः स्वप्नावस्थमनःस्थमनसायुक्तः सन् चरति वर्तते । इन्द्रियजन्यज्ञानावस्था जागरितावस्थेति । इन्द्रियोपरमे मनोजन्यज्ञानावस्था स्वप्नावस्थेति कथ्यते । स पुरुषो यदेन्द्रियमुपरतं व्यापारं कृत्वा मनोमात्र सहायो भवति, तदा तस्मिन् काले ते प्रसिद्धाः स्वर्गादिलोका अस्य पुरुस्य भवन्ति ।

(तदुतेव) तदुतापि अयं पुरुषः महाराज इव भवति, महाराजोचित-सामग्रीसंपन्नत्वात् । उतेवोतापि महाब्राह्मणः श्रोत्रियत्वादिसकलगुण-युक्तो भवति । यद्यपि "शंखे तैले तथा मांसे ब्राह्मणे" इत्यादि स्मृतेः ब्राह्मणे महत्शब्द प्रयोगोऽनुचित इति तथापि श्रोत्रियत्वाद्यनेकधर्मवत्वस्य ब्राह्मणे बोधयितुं महत्शब्दप्रयोगस्य सार्थकत्वसम्भवादिति । उ तै

**भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्त्ततएवमेवैष**

वोच्चावाचंहीनमध्यमोत्तमानेकप्रकारकमुपभोगसाधनीभूतशरीरमपि निगच्छति प्राप्नोति । यद्यपि स्वाप्नपदार्थाः परमात्मसृष्टतया आकाशादिवत् सत्या एवेति इव प्रयोगोऽनर्थक इवाभाति तथापि लोकद्रव्यानुसारेणैव शब्द-प्रयोगः कृतः । वैधर्म्याच्च न स्वप्नादिवदिति" सूत्रे विस्तरशः सूत्रकार एव दर्शयिष्यतीति ।

(स यथा महाराज इत्यादि) यथा कश्चिन्महाराजः सम्राट् जानपदान् जनपदे स्वाधिकृतप्रदेशे संजातान् मनुष्यादीन् गृहीत्वा आदाय स्वे जनपदे स्वकीयराजधान्याम् यथाकामं स्वेच्छया परिवर्तेत, तैः सह यथेष्टं विहारादिकं कुर्यात् । एवमेवैषो जीवात्मा एतत्प्राणान् चक्षुरादिज्ञानहेतून् गृहीत्वा स्वस्वस्थानेभ्य उपसंहृत्य वाह्यविषयात् रूपादिभ्यो ह्युपरत-व्यापारं कृत्वा स्ववशे संस्थाप्य स्वे शरीरे एव यथाकामं स्वेच्छया परिवर्तते विहारादिकं संपादयति :एष एव स्वप्नकालः यत्र खलु जीवे बाह्यज्ञानसाधनेन्द्रियादीनुपसंहृत्य स्वेच्छया स्वे शरीरे एव स्वप्रकाश-ज्ञानसामर्थ्यात् सर्वमुपनीतानुपनीतं पश्यतीति । न च "प्राणे न रक्षन्नपरं कुलायं वहिः कुलायादमृतश्चरित्वा" इत्यादि श्रुत्यन्तरे शरीराद्वहिः संचरणस्य प्रतिपादनात् । तथा स्वाप्नशरीरादिसृष्टेः प्रामाणिकत्वात् स्वे शरीरे एव यथाकाममिति कथनमत्र कथं संगतमिति वाच्यम्, स्वप्न-कालिकदेवादिशरीरस्यापि स्वकीयत्वेन स्वे शरीरे इत्यस्याविरोधात् स्वशब्दस्यात्मीयवाचकत्वस्यापि प्रसिद्धेः । अथैवम् "संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति" न्यायात् । शरीरान्तरस्यापि स्वीयत्वे स्वपदमेवानर्थकं भवति व्यभिचारावारकत्वात् । स्वप्नकाले देवमनुष्यादि-शरीरेण देशान्तरगमनस्य सर्वानुभवसिद्धतया पूर्वशरीराद्वहिर्गमनप्राप्ते

**एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्त्तते ।।१८।।**

**अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्तति सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते**

तद्व्यावर्तकतया स्वे शरीरे यथाकामं परिवर्तते इति वाक्यं सफलं स्यादिति चेत्सत्यम् ? स्वे शरीरे इत्यस्य स्वकीये शरीरे यत्र कुत्रापि यथाकामं परिवर्तते न तु जाग्रद्देहे एवेत्यर्थबोधकत्वात्तद्वाक्यस्य । अन्यथा बहिष्कुलायश्रुतिः "कुलायात् बहिरिव चरित्वेत्येवं गौणतया व्याख्याता भवेत् । ततश्च जीवस्य स्वशरीरे एव स्थिततया जाग्रद्दशावत् देहरक्षणस्य सिद्धत्वेन प्राणेन रक्षन्नवरं कुलायमिति प्राणद्वारा शरीरस्य रक्षणकथनं सर्वथैवानुपन्नं भवेत् तस्माद्बहिष्कुलायश्रुतिरुपपत्तिलक्षणतात्पर्यलिंगानुगृहीततया प्रबलाऽतो न गौणार्थतया व्याख्येतेति । एतद्वाक्य ब्रह्मसूत्रीयविहारोपदेशादित्यादिसूत्रे विस्तरेण निर्णीतमिति यथाकामं परिवर्त्यते इत्यादिना जीवस्य कर्तृत्वसमर्थनात् । बुद्धिनिष्ठं स्वाभाविक कर्तृत्व जीवेऽध्यस्यते इति कियन्तो मिथ्यावादिनः परास्ताः । बुद्धेः करणतया लोके प्रसिद्धत्वात् कर्तृत्वस्य सर्वथैवासंभवात् । यदि कदाचित् बुद्धौ कर्तृशक्तिः स्वीकियेत तदा सर्वार्थसम्पादकमन्यत् करणं कल्पितं स्यात् । समर्थस्यापि कर्तुर्लोके करणमादायैव प्रवृत्तिदर्शनात् । एवं च संज्ञामात्रे विवादः पर्यवस्येत न त्वर्थभेदः स्यात् । तस्माद्वरं लोकवेदसमर्थितमात्मन एव कर्तृत्वं न तु दुद्धेस्तस्याः करणरूपेणैव चारितार्थ्यसंभवदिति कृतमप्रासंगिके नेति ।।१८।।

(अथ यदेत्यादि) अथ स्वप्नादनन्तरम् यदा यस्मिन् काले जीवः सुषुप्तो भवति सुषुप्तिदशामापद्यते यदा यस्मिन् काले सुषुप्तिकाले कस्यचन किंचिदपि बाह्यमान्तरं वा न जानाति बाह्यकरणस्य चक्षुरादेरान्तरकरणस्य मनसश्चोपरमात् वेद विजानाति । जीवो हि ज्ञानस्य कर्ता करण

ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ।१९।

स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा

बाह्यं चक्षुरादि आभ्यन्तरं मनः एतदुभयमप्युपरतम् ततः करणाभावात् सुषुप्तिसमये किमपि न जानाति जीव इति । तत्र हिता आत्मनो हितप्रापकत्वात् हिता नाम तन्नाम्न्यः नाड्यः ताश्च द्वासप्ततिसहस्राणि द्विसहस्राधिकसप्ततिः सहस्राणि नाड्यो भवन्ति, ता नाड्यः हृदयात् पुरीततमभिप्रतिष्ठन्ते हृदयात् हृदयप्रदेशात् पुरीततशब्दित हृदयान्तर्वर्ति मांसखण्डं अभिअभिमुखीकृत्य प्रतिष्ठन्ते प्रस्थिता भवन्ति । ताभिर्यथोक्तसंख्याभिर्नाडीभिः प्रत्यवसृप्येन्द्रियादिकरणसमुदायोपसंहरणपूर्वकंताभिर्द्वारभूताभिर्नाडीभिःप्रत्यागत्य पुरीतति पुरीतत वर्तमाने परमात्मनि (ब्रह्मणि) शेते शयानो भवति । पुरीतति शेते इत्यस्य पुरीतति वर्तमाने परमेश्वरे शेते इत्यर्थः । "य एषोन्तर्हृदयाकाशस्तस्मिन् शेते "इति श्रुत्यन्तरे परमेश्वरस्य सुषुप्त्याधारत्वस्य प्रतिपादनात् । पर्यंकास्तरणयोः शयानपुरुषाधारत्ववत् पुरीततपरमात्मनोरपि संकलय्य सुषुप्तजीवाधारत्वस्य । तदभावो नाडीषु इति सूत्रे समर्थनस्य दर्शनात् अत एतत्प्रतिपाद्यविषयस्तत्रैव विशेषतो द्रष्टव्य इति ।

(स यथा कुमारो वेत्यादि) स सुषुप्तजीवो यथा येन प्रकारेण कुमारो जातमात्रो बालो राजकुमारो वा महाराजः सम्राड् वा महाब्राह्मणः श्रोत्रियात्वादिगुणविशिष्टो ब्राह्मणो वा । अतिध्नी अतिशयितामानन्दस्य मात्रां गत्वा प्राप्य शयीत शयनं कुर्यात् तथा एवमेष सुप्तः पुरुषोऽतिशयवितानन्दमात्रामासाद्य । एतत् एतस्मिन्काले पुरीततप्रतिपाद्यपरमात्मनि शेते शयनं करोति ।।१९।।

एतावता प्रकरणेन क्वैष तदाऽभूदिति प्रश्नस्योत्तरं दत्त्वा कुत एतदागादिति प्रश्नस्योत्तरं दातुं प्रक्रमते—

**व्युच्चरन्त्येवमेवास्मादात्मनः सर्व्वे प्राणाः सर्वे लोकः सर्व्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा**

(स यथोर्णनाभिरित्यादि) स यथा येन प्रकारेण ऊर्णनाभिः लूतानामकः कीटविशेषस्तन्तुजालमध्ये वर्तमान एव तन्तून् उच्चरेदुत्पादयेत् आहारग्रहणार्थं "तन्तुद्वारा निर्गतो भवतीति तद्वत्प्रकृतेऽपीति। प्रकारान्तरमपि दर्शयति।

(यथाऽग्नेरित्यादि) यथा येन प्रकारेणाग्नेः पिण्डितादग्नेः सकाशात्। क्षुद्राः स्वल्पाः विस्फुलिंगाः कणा इतस्ततो व्युच्चरंति निर्गता भवन्ति पिण्डितवह्नेः क्षुद्रकणानां निर्गमनं भवतीत्यर्थः। एवमेवानेनैव प्रकरेणास्मादात्मनः सुषुप्त्यधिकरणात् परमात्मनः सकाशात्सर्वे हीनमध्यमोत्तमाः प्राणाः प्राणपदबोध्याः प्राणवन्तो जीवाः सर्वे लोकाः सर्वाणि ज्ञानानि चाक्षुषादीनि, अत्र लोकशब्दो ज्ञानपरकः, लोकनं लोक इति व्युत्पत्त्या लोक शब्दस्य चाक्षुषादिज्ञानप्रसिद्धेः। सर्वे देवाः सर्वाणि ज्ञानसाधनानि चक्षुरादीनीन्द्रियाणि अत्र देवशब्दो ज्ञानसाधनेन्द्रियादिपरकः, द्योतनाद्देवा इति व्युत्पत्त्या तेषामपि तद्वाच्यत्वादिति। तथा सर्वाणि भूतानि व्युच्चरन्ति निर्गच्छन्तीत्यर्थः। न चजीवः कस्मादागत इति प्रश्नस्योत्तरम् अमुकस्थानादागत इत्येव वक्तव्यम् न तु सर्वोद्गमनप्रकारप्रदर्शनं युक्तमिति वाच्यम्, श्रुतेरालस्याभावात्। न च श्रुत्यन्तरे एतस्मादात्मनः प्राणा यथायतनमित्यादौ क्रमान्तरो दर्शितस्तेनात्र विरोधः स्यादिति वाच्यम्। न्यायसमाश्रयणेनाविरोधसम्पादनस्य सम्भवादिति।

(तस्येत्यादि) तस्य परमात्मनः सत्यस्य उपनिषत्सत्यम्। उपनिषद्दृश्यमिति नामेत्यर्थः। प्राणा आत्मानः सत्यम् तेषामेष सत्यम् जीवात्मनामचेतनवत् स्वरूपान्यथाभावात् सत्यत्वम्। परमेश्वरस्य तु

वं सत्यं तेषामेष सत्यम् ।।२०।।

इति बृहदारण्यकोपनिषदि द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ।।१।।

धर्मात्मकज्ञानस्वभावान्यथाभावस्याप्यभावात् तदपेक्षयाप्यधिकसत्यत्वमिति ।।२०।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये द्वितीयाध्यायस्य प्रथमं ब्राह्मणं समाप्तम् ।। १ ।।

---

## द्वितीयाध्याये द्वितीयं ब्राह्मणम्

**यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद सप्त**

यो ह वै उपासकः शिशुं पंचवृत्त्यात्मकं प्राणम् शिशुरिव शिशुम्। इतरकरणवत् क्रियाकर्तृत्वादिरहितत्वात् । एनं शिशुं बालम् साधानम् आधीयतेऽस्मिन्निति साधानं शरीरसहितम् सप्रत्याधानं सस्थूणं स्थूणया सहितम् सदामम् पाशसहितम् वेद विजानाति तस्येदं वक्ष्यमाणं फलं भवति । किं तत्फलं भवति तत्राह--

(सप्त हेत्यादि) सप्त स उपासकः सप्तसंख्याकान् द्विषतो द्वेषं कुर्वतः भ्रातृव्यान् शत्रून् अवरुणद्धि अपावृणोति विनाशयति । अथवा स्ववशे तान् शत्रून् करोतीति । सम्प्रति श्रुतिरेव पूर्वमंत्रस्यार्थं प्रकाशयितुमाह--

(अयं वा वेत्यादि) अयं मध्यमः देहाभ्यन्तरवर्ती पंचवृत्त्यात्मकः प्राणो वः स एव शिशुर्बालः यथेतरकरणं क्रियाकर्तृत्वादिविशिष्टं न तथा मध्यमः प्राणः क्रियाकर्तृत्वादिविशिष्टः स्वातन्त्र्येण तत्क्रियाया अभावात् । अत एव मध्यमप्राणः शिशुरिव शिशुरिति कथ्यते । तस्य शिशोर्वत्सस्थानीयस्य

**ह द्विषतो भ्रातृव्यानवरुणद्धि । अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणान्नं दाम ।१।।**

**तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन् लोहिन्यो**

मध्यमप्राणस्य । इदं परिदृश्यमानं शरीरमेवाधानम् । आधीयतेऽस्मिन्नित्याधानं निवासभूमिरित्यर्थः । इदमेव प्रत्याधानं प्रत्यक्षोपस्थापितं शरीरमेव प्रत्याधानम् । आहितस्याधानं प्रत्याधानम् । गर्भे आहितो वत्सः पश्चात् भूम्यादावाधीयत इति प्रत्याधानम् प्रसवभूमिः, एव प्रकारेण हृदयात्मकप्रदेशविशेषे लब्धस्वरूपो मध्यमप्राणस्तदनु सर्वशरीरेऽभिव्यज्यते इति प्रत्याधानं प्रसूतिभूमिरिति । अस्य शिशोर्मध्यमप्राणस्य प्राणो जीवात्मा स्थूणा बन्धनस्थानम् । स्थूणायामेव वत्सो बद्धो भवति । एवं प्रकृते प्राणपदप्रतिपाद्ये जीवात्मनि मुख्यप्राणो बद्धो भवति । यावदेव शरीरेऽस्मिन् जीवो वसति तावदेव मुख्यप्राणो देहे स्थितो भवति जीवापगमे प्राणस्यापि शरीरात् निर्गमदर्शनादतो जीवात्मा प्राणस्य स्थूणास्थानापन्नो भवतीति । अस्य शिशोः प्राणस्यान्नं व्रीहियवादिकमेव दाम पाशः अन्नात्मकपाशेन बद्धो हि प्राणोऽस्मिन् देहे प्रतिवसति भोजनाभावे देहान्निर्गमात् तस्मात्प्राणस्यान्नं दामेति । "अन्नं प्राणस्य षड्विंश" इति श्रुतेः तत्र षड्विंशो नाम पाशविशेषः । एतदुक्तं भवति शरीरजीवन्ना दिभिर्बद्धप्राय एव प्राणो वसति एतस्यान्यतमस्याप्यभावे न भवति प्राण इति साधानादिविशिष्टप्राणस्य ज्ञानवान् पुरुषो भ्रातृव्यमपि स्ववशे स्थापयतीति विदुषः फलमपि दर्शितं भवतीति भावः ।।१।।

(तमेता इत्यादि) तं करणात्मकं शरीरेऽन्नबन्धनं प्राणं चक्षुरादावारूढं प्राणम् एता वक्ष्यमाणाः सप्ताक्षितयः सप्तसंख्याका अक्षितयो क्षितिकारणत्वादुपतिष्ठन्ते उपस्थिता भवति । न विद्यते क्षितिर्विनाशो येषां ते अक्षितयः । यदेतेषामक्षितित्वं तन्न सार्वदिकमपि त्वापेक्षिकम् ।

राजयस्ताभिरेनं रुद्रोऽन्वायत्तोऽथ या अथन्नापस्ताभिः पर्जन्यो या कनीनिका तयादित्यो यत् कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्त्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥२॥

(तद्या इत्यादि) तत् तत्र अक्षन् अक्षिणि चक्षुषि या इमाः परिदृश्यमाना लोहिन्यो लोहिता रक्ताकारा इत्यर्थः राजयो रेखाविशेषाः ताभिर्लोहितरेखाभिः तद्द्वारेण एनं मुख्यप्राणं रुद्रो रुद्रदेवो अन्वायत्तोऽनुगतो भवतीति । अथवा अक्षन् चक्षुषि आपो जलानि परिदृश्यन्ते धूमादिकटुद्रव्यस्य संयोगविशेषेण चक्षुषि जलोद्गमो भवति ताभिरद्भिस्तद्द्वारेणेत्यर्थः पर्जन्यो देवतात्माऽनुगतो भवति । अथ या चक्षुषि कनीनिका तेजोमयी तारका दृक्शक्तिरित्यर्थः तया द्वारभूतया कनीनिकया एनं मुख्यं प्राणमादित्यः सूर्य उपतिष्ठते उपस्थितो भवतीति ।

(यत्कृष्णमित्यादि) चक्षुषि यत्कृष्णं परिदृश्यते तेन द्वारभूतेन अग्निदेवतात्मकः प्राण उपतिष्ठते । तथा चक्षुषि यत् शुक्लं परिदृश्यते तेन द्वारभूतेनेन्द्रो बलाभिमानिदेवः प्राणमुपतिष्ठते । एनं प्राणं । अधरया वर्तन्या पक्ष्मणा पृथिवी अन्वायत्ता अनुगता भवति । अधरस्योभयत्रापि समानत्वात् । तथा द्यौरुत्तरयोपरिस्थितया वर्तन्या पक्ष्मणा तद्द्वारेण एनं प्राणमुपतिष्ठते । ऊर्ध्वत्वस्योभयत्रापि समानत्वात् । सप्ताक्षित्युपस्थेयचक्षुर्निष्ठप्राणज्ञानस्य फलविशेषं दर्शयितुमाह ।

(नास्यान्नमित्यादि) यः पुरुष एवं यथोक्तं वेद विजानाति । अस्य विज्ञातुरन्नं व्रीहियवादि कदापि न क्षीयते न विनश्यति सर्वदैवान्नभोगी भवतीत्यर्थः ॥२॥

**तदेष श्लोको भवत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपं तस्यासत ऋषयः सप्ततीरे वागष्टमी ब्रह्मणा संविदानेत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिल-श्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो निहितं विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्ततीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥३॥**

(तदेषश्लोको भवतीत्यादि) तत् तत्र तस्मिन् अर्थे एषो वक्ष्यमाणः श्लोको भवति

( अर्वाग्बिलश्चमस इत्यादि) एतन्मंत्रस्य श्रुतिः स्वयमेव व्याख्यां करोति अर्वाग्बिलश्चमस इत्यादि इदं तदेव शिरो लोकप्रसिद्धमेव शिरः कण्ठ-प्रदेशादुपरिस्थितो भागः एष ह्यर्वाग्बिलश्चमसः तत्र चम्यते व्रीह्यादिकमनेनेति चमसो भक्षणेऽसाधारणं कारणम् । अयं च मुखात्मकश्चमस अर्वाग्बिल ऊर्ध्व-बुध्नः मुखस्य बिलरूपत्वादर्वाग्बिलः शिरसश्चोर्ध्वस्थूलमूलभागरूप-बुध्नाकारत्वात् ऊर्ध्वबुध्नत्वम् । यागादिसाधभूतो लोकप्रसिद्धश्चमस ऊर्ध्वबिलः तिर्यग् बुध्नो भवति, अयन्तु मुखरूपश्चमसस्तदपेक्षयातीव विलक्षण इति । तस्मिन् यशो विश्वरूपमेतद्वाक्यं प्राणमेव कथयति । तत्रकरणं दर्शयति । प्राणा वै यशो विश्यरूपमिति मुख्यप्राणस्य प्राणा-पानाद्यनेकरूपतया यशोवत् बहुदूरव्यापित्वात् यशस्त्वेनोपमानं भवति, वृत्ति-भेदात् प्राणा इत्यत्र बहुवचनम् । तस्य प्राणस्यासत ऋषयः सप्ततीर इति प्राणा वै ऋषयः प्राणानेवैतत् प्राह तस्य मुख्यप्राणस्य समीपे साक्षिश्रोत्र नासिकामुखात्यकोपाधिसम्बन्धिवः सप्तशिरसि वर्तमानाः प्राणा वर्तन्ते इत्यर्थः ।

(वागष्टमीत्यादि) इयं वाक् ब्रह्मणा वेदेन संविदाना संवादं कुर्वती अष्टमी भवति । वाक् हि अष्टमी ब्रह्मणा संवित्ते इति ॥३॥

**इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्व्वस्यात्ता भवति सर्व्वमस्यान्नं भवति सर्व्वमस्यान्नं भवति य एवं वेद ।।४।।**

**इति बृहदारण्यके द्वितीयध्यायस्य द्वितीयं ब्राह्मणं ।।२।।**

के सप्त ऋषय ? इत्यत्र कर्णौ प्रदर्शयन्नाह

( इमावे वेत्यादि ) इमौ कर्णौ शब्दग्रहणसाधनभूतौ गौतमभरद्वाजौ । तत्र तयोर्मध्ये अयमेवैको गौतमः अयमेवैको भरद्वाज इति । नेत्रे उपदिशन्नाह–

(इमावे वेत्यादि) द्वयोश्चक्षुषोर्मध्ये एकं विश्वामित्रोऽपरं जमदग्निः घ्राणे उपदिश्योवाच । इमावेव वसिष्ठ कश्यपौ तत्रैको वसिष्ठोऽपरः कश्यपः । वागेवात्रिः यतो वाचोऽधिष्ठानभूतेन मुखेन चतुर्विधमन्नमद्यते तस्मात्कारणात् वागिन्द्रियमेव प्राणास्यात्रिरिति ।

(अत्रिर्हवै इत्यादि) अत्रिर्हवै नामै तद्यदत्तिरिति । अत्तृत्वादत्तिरिति नामपदे तदत्रिरिति कथ्यते । वागत्रित्वविज्ञानस्य फलं दर्शयति

(सर्वस्यात्ता भवतीति इत्यादि) यः खलूपासक एवं यथोक्तं वेद जानाति तदुपासनं करोति तस्य सर्वमिदं परिदृश्यमानमन्नं भवति, सर्वस्याप्यत्ता भक्षको भवति इति ।।४।।

इति बृहदारण्कोपनिषदि आनन्दभाष्ये द्वितीयाध्यायस्य द्वितीयं ब्राह्मणं समाप्तम् ।।२।।

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાઽજ્ઞાનકીનાથો વેદવ્યો મહામતિઃ॥

## द्वितीयाध्याये तृतीयं ब्राह्मणम्

**द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च ॥१॥**

**तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य**

परमात्मनः शरीरद्वयं दर्शयितुमुपक्रमते—

(द्वे वावेत्यादि) अत्र वाव शब्दः प्रसिद्धार्थद्योतकः ब्रह्मणः साकेताधिपतेः परमात्मनो रामाख्यस्य द्वे द्वित्वसंख्याविशिष्टे रूपे शरीरे। किं तत् शरीरद्वयं तत्राह—

(मूर्तं चामूर्तं चेत्यादि) मूर्तमेकं शरीरममूर्तं चापरं शरीरम्। तत्र मूर्तं मूर्तिमत् परिच्छिन्नं कठिनात्मकं पृथिव्यादिकं, अमूर्तमकठिनं वाय्वाकाशात्मकं तत्र कठिनत्वं गुरुत्ववत्वमेवैति हि पृथिव्यादेर्गुरुत्ववत्वात्पतनं न तथा पतनं भवति वाय्वाकाशयोः। मर्त्यं चामृतं चेति मर्त्यं मरणधर्मकं विनाशीत्यर्थः अमृतममरणधर्मकमविनश्वरमित्यर्थः वाय्वाकाशयोरमृतत्वं पृथिव्याद्यपेक्षयाऽधिककालावस्थायित्वलक्षणमेव न त्वात्यन्तिकं तत्त्वम् प्रलयादौ तन्नाशस्यापि श्रुतिस्मृतिप्रसिद्धेः।

(स्थितं च सच्चेति) तत्र स्थितं तत् यदव्यापकम् सर्वान् व्याप्य न वर्तते तादृशम् सत्प्रत्यक्षोपलभ्यम्।

(यच्चत्यच्चेति) तत्र यद्व्यापकम्। यदिति इणो रूपम् तदर्थस्तु एति गच्छति सर्वान् यत् तत् तथाविधं सर्वव्यापकमित्यर्थः, त्यत् व्याप्यम् सर्वं व्याप्य न वर्तते परिच्छिन्नमित्यर्थः ॥१॥

संप्रति मूर्तामूर्ते श्रुतिः स्वयमेव दर्शयति

(तदेतन्मूर्तमित्यादि) तदेतत् मूर्तमिति कथ्यते यद् वायोः सर्वदेरण-

मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥२॥

अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्या-

स्वभावकपवनात् अन्यद् भिन्नं तथा यत् अन्तरिक्षादाकाशात् शब्दमात्रविशेष-कादन्यत् भिन्नं तदेतत् पृथिवीजलतेजोलक्षणं कठिनत्वविनाशित्वाव्याप-कत्वचाक्षुषादिप्रत्यक्षोपलभ्यत्वलक्षणधर्मयुक्तत्वेन मूर्तमर्त्यस्थितसत्शब्द-बोध्यं तदेतन्मूर्तम् । एतदेव मूर्तं मर्त्यं विनाशित्वधर्मयुक्तम् । स्थितं स्थितत्वधर्मविशिष्टम् एतत् एतदेव सत् सत्शब्दवाच्यम् । अयमाशयः तदेव ब्रह्मशरीरतया निदिश्यमानं मर्त्यं यत् वायु गमानभिन्नत्वेसति मर्त्यत्वादि-धर्मकं पृथिवी जलतेजोलक्षणमेव । पृथिव्यप्तेजासामेव क्वचित् मूर्तपदेन क्वचिन्मर्त्यपदेन क्वचित् स्थितपदेन क्वचित् सत्प देनशास्त्रे व्यवहारो भविष्यतीति पृथिवीजलतेजोलक्षणमेव मूर्तं तत् परमेश्वरस्य शरीरभूत-मेवेति ।

(तस्यैतस्येत्यादि) य एष प्रयक्षरूपेण सविता आदित्यमण्डले तपति प्रकाशातमकं-कार्यं करोति स आदित्यः तस्यैतस्य मूर्तस्य कठिनत्वधर्मयुक्तस्य तेजोबन्नलक्षणस्यैव रसः सारभूतो विद्यते । एवमेतस्य मर्त्यस्य विनाशित्व-लक्षणधर्मयुक्तस्य एतत्स्थितस्याव्यापकत्वधर्मयुक्तस्य तथैतस्य सतः प्रत्यक्षोपलभ्यमानत्वधर्मयुक्तस्य तेजोबन्नलक्षणस्यैव रसः सारभूतः । सतो ह्येष रसः एष आदित्यः सतः प्रत्यक्षोपलभ्यमानस्यैव रसः । प्रत्यक्षोपलभ्य-माने आदित्यमण्डले मूर्तत्वादिधर्मचतुष्टययुक्ते तेजोबन्नरसत्वबुद्धिः करणीयेति भावः ॥२॥

अथ मूर्तप्रपंचं सपरिकरं निरूप्य तदनु अमूर्तप्रपंचं निरूपयितुमाह-

(अथामूर्तमित्यादि) अथ मूर्तविवंचनानन्तरम् । अमूर्तं तत् यत् पृथिवीजलतेजोव्यतिरिक्तं वायुश्चान्तरिक्षं च । वाय्वाकाशौ अमूर्तपद-

**मूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ॥३॥**

**अथाध्यात्ममिदमेव मूर्त्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥४॥**

वाच्यौ भवत इति । एतत् वायुरन्तरिक्षमुभयमपि अमृतं मरणधर्मविवर्जितम् । एतदुभयं यत् व्यापकत्वधर्मविशिष्टमं । एतदेवोभयं त्यत् प्रत्यक्षानुपलभ्यम् वाय्वाकाशे च रूपाभावात् चक्षुरिन्द्रिय ग्राह्यत्वलक्षणप्रत्यक्षोपलभ्यत्वं नास्ति । तस्यैतस्यामूर्तस्य काठिन्यरहितस्य तस्यैतस्यामृतस्य मरणधर्मरहितस्य तस्यैतस्य यतः सर्वव्यापकस्य । एतस्य त्यस्य प्रत्यक्षानुपलभ्यस्य वाय्वन्तरिक्षलक्षणस्य रसः सारभूतो यः एतस्मिन् आदित्यमण्डले वर्तमानः पुरुषः स एतयोरेव रसः अमूर्तत्वादिलक्षणधर्मचतुष्टययुक्तवाय्वन्तरिक्षसारभबुद्धिरादित्यमंडलस्थपुरुषे करणीयेति भावः ।।३।।

एतावता प्रबन्धेनाधिदैवतमुपासनाप्रकारो दर्शितः । अतः परमध्यात्ममूर्तामूर्तयोरुपासनाप्रकारं दर्शयितुमुपक्रमते—

( अथाध्यात्ममित्यादि ) . अथाधिदैवतोपासनाप्रकारप्रदर्शनान्तरम् अध्यात्मम् आत्मानं शरीरमधिकृत्योपासनाप्रकारः प्रदर्श्यंते । इदमेव मूर्तम् यत् प्राणात् शरीरान्तःसंचारिप्राणात् तथा यश्चायमानन्तरात्मन् देहाभ्यन्तर्वर्ती आकाशः आभ्यां यदन्यत् भिन्नम् पृथिव्यप् तेजोलक्षणं तदेव मूर्त्तम् शरीरारम्भकम् प्रथमतो भूतत्रयमित्यर्थः । तदेवाध्यात्मं मूर्तं एतन्मूर्तत्रयं मर्त्यं विनाशि स्थितं स्थितमेवाव्यापकम् । एतत्सच्चक्षुरादिजन्यज्ञानविषयत्वात्प्रत्यक्षम्, एतस्य मूर्तस्येत्यादिकं पूर्ववदेव व्याख्येयम् ।

**अथामूर्त्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यत्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेक्षन् पुरुषस्त्यस्य ह्येष रसः ॥५॥**

**तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं बासो यथा**

एतस्यैव सतो रसः सारभूतं यत् चक्षुश्चक्षुरिन्द्रियम् सतो हि एष रसः । प्राणहृदयाकाशभिन्नशरीरमध्यस्थितमूर्तत्वादिधर्मचतुष्टयाधिकरणीभूतं यत् भूतत्रयं तस्य चक्षुरेव रसः इति भावः । अथाध्यात्मममूर्तम् प्राणः यश्चायमन्तरात्मन्नाकाशो देहाभ्यन्तरवर्ति, आकाश एतदुभयम् । एतदुभयममृतमेतद्यत एतदेवोभयं त्यत्पदवाच्यमपि तस्यैतस्यामूर्तस्यैतस्यामृत स्यैतस्य यत् एतस्य त्यस्य रसः सारभूतो योऽयं दक्षिणेऽक्षन् दक्षिणनेत्रे वर्तमानः पुरुषः परमात्मा स एव रसः सारभूतः त्यस्य ह्येष रसः । अमूर्तत्वादिधर्मचतुष्टयाश्रयीभूतप्राणहृदयाकाशयोर्दक्षिणनेक्षस्थितः पुरुषः परमात्मा रस इति भावः । अथाचित्प्रपंचो भगवत्शरीरतया व्याख्यातः चित्प्रपंचस्तु न तत्शरीरतया कथितः चित्प्रपंचबोधकपदाभावात् । तथा च परमात्मनः कथं चिदचित्शरीरकत्वमिति चेत्सत्यम् ? अचित्प्रपंचस्याकाशादेश्चेतनोपसंसृष्टतया चिदुपादानत्वस्यापि परमेश्वरे संभवात् । अत एव चिदचिच्छरीरकत्वं परमात्मनः सिद्धमिति ॥५॥

(तस्य हैतस्येत्यादि) तस्य हैतस्य प्रकृतस्य पुरुषस्य रूपं स्वरूपं यथामाहारजनं वासः तत्र माहारजनं हरिद्रा तद्रंजितं वासो वस्त्रम् यथा वा पाण्ड्वाविकं कम्बलः यथा वेन्द्रगोपः शक्रगोपकृमिः यथाग्न्यर्चिः अग्नेर्ज्वाला । यथा वा पुण्डरीकं कमलम् । यथासकृद्विद्युत्तं विद्योतनं सकृत्सकृत्प्रवृत्तविद्युत्वत् एवंप्रकारकं तस्य पुरुषस्य रूपं भवतीति भावः । यः उपासक एवं सकृत् विद्युत् विद्योतनवत् प्रकृतपुरुषस्य

**पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथया पुण्डरीकं सकृद्विद्युत्तम् यथा सकृद्विद्युतेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो**

विजानाति । अस्य विदुषः श्रीर्लक्ष्मीः शोभा वा सकृत् विद्युत्तेव भवति विद्युद्वदेव सर्वदा प्रकाशमाना भवतीति भावः ।

(द्वे वाव ब्रह्मणो रूपे) इत्यादि प्रकरणेन परमात्मनो मूर्तामूर्तात्मक-रूपद्वयवत्वं कथितम् । तदुभयमपि रूपमियत्तापरिच्छिन्नमिति तत्प्रयुक्ते-यत्तालक्षणपरिच्छेदप्रकारवत्वं ब्रह्मणोऽपि प्राप्तं ततश्च परमात्मापीयत्ता-परिच्छिन्नः स्यादिमां शंकामपनेतुमुपक्रमते—

(अथात आदेश इत्यादि) अत्राथातः शब्दौ वाक्यान्तरोपन्यासार्थकौ नेतीत्यत्रेति शब्द इयत्तात्मकप्रकारपरकः । नेति नैवम् नैवमर्थः आदेश उपदेशः नेति नेति मूर्तामूर्तलक्षणद्वयवत्वप्रयुक्ते यत्तालक्षणप्रकारयुक्तः परमात्मा न भवतीत्यर्थः । अयमाशयः जगतो नामरूपात्मकस्य मूर्तामूर्त लक्षणविभागविभक्तस्य मृषात्वं ये मन्यन्ते तन्मतं निरासार्थमयमुपक्रमः । शंकितं तैर्यदि मूर्तामूर्तलक्षणकं पृथिव्यादिकं भगवतः शरीरात्मकं स्यात् तदा मूर्तामूर्तयोरियत्तापरिच्छिन्नतया तद्वत्तेन परमात्मनोऽपीयत्तापरिच्छेद्यत्वं स्यात् । तत्रैवं श्रुतिः प्रतिपादयति – अयमुपदेशो यत् धर्मस्येयत्ता-परिच्छिन्नत्वेऽपि धर्मिणो ब्रह्मण इयत्तापरिच्छिन्नत्वं नैव नैवेति । यद्ब्रह्म-प्रतिपादितं तस्मादेतस्मात् परं भिन्नं वस्तु नास्ति । ब्रह्माभिन्नं स्वरूपतो गुणतश्च परं वस्तु नास्तीत्यर्थः नत्वस्य मात्रस्यात्र निषेधो वर्ण्यते, तथासति अन्यत्परमित्यस्य वैयर्थ्यं स्पष्टमेव स्यादिति । एतदेव व्युत्पादयति—

(अथ नामधेयमित्यादि) अथ नामधेयं नामरूपात्मकं वस्तु सत्यम् । तदपेक्षया प्राणाश्चेतना जीवाः सत्यम् । ततोऽपि जीवेभ्योऽपि कस्या-मप्यवस्थायां ज्ञानादिसंकोचाभावात् परमात्मा सर्वदैव सत्यं निर्विकारम् । अतो भगवत इयत्तापरिच्छेद्यत्वं नास्तीति । अथ "द्वे वाव ब्रह्मणो रूपे"

**नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥६॥**

**इति बृहदारण्यके द्वितीयाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥**

इत्यादिना कथितस्य मूर्तामूर्तलक्षणधर्मस्य । अथात आदेशो नेति नेतीत्यादिना निराकरणं कस्मान्न भवति तन्निराकरणे च तद्वारा तद्वतो-ब्रह्मणोऽपि निषेधः प्राप्नोत्येव । न च ब्रह्मणो निषेधे ब्रह्मस्वरूप प्रतिपादक-शास्त्रं निर्विषयं स्यादिति वाच्यम् । एवं सति द्वे वा ब्रह्मणो रूपे इति मानान्तराप्राप्त रूपद्वयवत्त्वप्रतिपादकशास्त्रस्यापि नैरर्थक्यप्रसंगस्य समानत्वात् । न चोपासनार्थं तदुपदेशसार्थक्यमिति वाच्यं ब्रह्मस्वरूप प्रतिपादकशास्त्रस्यापि सार्थकत्वसंभवात् । तस्मात् नेति नेति वाक्येनेयत्त्वैव निषिद्धयते न त्वन्यत्सर्वं निषिद्धं भवतीति । यद्यपि परमात्मनो मनुष्यादिदेहेऽवस्थाने तत्प्रयुक्त सुखदुःखादिमत्त्वं स्यात्, तथापि यथा गृहे देवदत्तयज्ञदत्तयोरुभयोरप्यवस्थान तत्र गृहदाहे गृहाभिमानिन एव तत्कृतसुखदुःखादिमत्वं न तु तदभिमानरहितस्य एवं जीवेशयोर्देहेऽवस्थानेऽपि देहाभिमानिनो जीवस्यैव सुखदुःखादिमत्त्वं न तु परमात्मनः "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्योऽभिचाकशीति" श्रुत्यापि एकस्यैव भोक्तृत्वं न तु परमात्मन इति । एतस्मिन्नधिकविचारो ब्रह्मसूत्रे द्रष्टव्य इति ॥६॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये द्वितीयाध्यायस्य तृतीयं ब्राह्मणं समाप्तम् ॥३॥

સમરીતિર્મહાતેજા: પરબ્રહ્મ સનાતન: |
જયતાજ્જાનકીનાથો વેદવ્યાસો મહામતિ: ||

Pawan Nagpal

## द्वितीयाध्याये चतुर्थं ब्राह्मणम्

**मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥१॥**

**सा होवाच मैत्रेयी यन्नु म इयम्भगोः सर्व्वा पृथिवी वित्तेन**

मोक्षप्राप्तौ परमात्मैवोपाय इति मोक्षप्राप्त्युपायत्वसर्वचराचरजगत्कारणत्वसर्वात्मत्वादिविविधकल्याणात्मकभगवद्गुणप्रतिपादनेच्छाया मैत्रेयीब्राह्मणमिदमुपक्रमते ।

(मैत्रेयीतीत्यादि) आसीत् साकेताधिपतिसेवापरायणो गृहस्थो याज्ञवल्क्यनामको महाऋषिस्तस्य गार्हस्थ्ययात्रासम्पादिके द्वे भार्ये बभूवतुः । स ऋषिर्गार्हस्थ्यजीवनं भगवत्सेवायां प्रतिबन्धकमिव मन्यमान एकान्ततो भगवत्सेवां कर्तुमाश्रमान्तरमिच्छन् पत्नीभ्यां लौकिकं द्रविणं समं विभज्य दत्त्वा यास्यामीति निश्चित्य स याज्ञवल्क्यः हे मैत्रेयीत्येवं रूपेण तामामन्त्र्योवाच । किमुवाच तत्राह–

(उद्यास्यन्वेत्यादि) अरे मैत्रेयि ! अहं याज्ञवल्क्योऽस्मात् स्थानात् गार्हस्थ्यलक्षणाश्रमात् अथवा यत्र नगरे ग्रामे वा वसामि युवाभ्यां सह तस्माद्ग्रामात् नगरात् उद्यास्यन् ऊर्ध्वं गन्तुमिच्छन् पारिव्राज्यं ग्रहीतुमिच्छामि । हन्त ते तवानया सपत्न्या कात्यायन्या सह । अन्तं द्रव्यविभागनिश्चयं कलहशान्त्यर्थं करवाणि कर्तुमिच्छामीच्छामि । येन मयि गते युवयोः कलहो द्रव्यार्थं न भवतु अतो द्रव्यविभागं कर्तुमिच्छामीति भावः ॥१॥

एवं याज्ञवल्क्यवचनं श्रुत्वा भगवत्सेवामेव परं मन्यमाना सा मैत्रेयी याज्ञवल्क्यं प्रत्युवाचोक्तवती । भगोः! हे भगवन् पूज्य ! सर्वा संपूर्णापि पृथिवी वित्तेन धनेन पूर्णा परिपूर्णा स्यात् मितेच्चेत् । तदा किमहं तेन

**पूर्णा स्यात् कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥२॥**

**सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां**

वित्तेन धनेन अमृता संसारसागरं ततुं समर्था स्यां भवेयम्। भगवद्भक्ति-मन्तरेण केवलवित्तेन संसारान्मुक्तिर्मे भविष्यति किमिति प्रश्नः। तद्वचनं श्रुत्वा याज्ञवल्क्यः प्राह—

(नेतीत्यादि) हे मैत्रेयि ! नेति। अर्थात् यत्त्वया पृष्टं यद्वित्तेन संसारमुक्तिर्भविष्यति तन्न मन्तव्यम्, वित्तसाध्यत्वाभावान्मोक्षस्येति। यदि वित्तेन मोक्षो न स्यात् तदा किमनेन वित्तेन। तत्राह—

( यथैवोपकरणवतामित्यादि ) यथा येन प्रकारेणोपकरणवतां लौकिकोपकरणविशिष्टानां धनिकानां जीवितुं लौकिकसुखविशिष्टं जीवनं सिद्धं भवति, तथैव ते भोगोपकरणवित्तविशिष्टायास्तवापि जीवितं सुखेन जीवनं स्यात् लभ्येतेत्यर्थः। अमृतस्य मोक्षस्य वित्तेनाशा नास्ति। मोक्षस्य वित्तसाध्यत्वाभावेन तेन तदाशा निरर्थिका। न हि पटसाधन-समवधानेऽपि कदाचिदपि घटो जायते तत्कस्य हेतोः घटस्य पट-साधनाऽसाध्यत्वात्। यो हि यत्र हेतुस्तत्समवधाने तदुत्पत्तेरेव लोकयुक्ति-सिद्धत्वात्। अतो वित्तेन मोक्षस्य नाशा किन्तु वित्तेन लौकिकमेव सुखं कथंचित्स्यादिति भावः ॥२॥

एवं याज्ञवल्क्य वचनं श्रुत्वा सा मैत्रेयी उवाच किल। येन साधनेनाहममृता मोक्षवती न स्यां न भवेयम्, तेन साधनेन किमहं कुर्याम् ? निरर्थकं तादृशसाधनं तदुपदेशवचनं च। तस्मात्कारणात् भगवान्समस्तविद्यैश्वर्यसम्पन्नो भवान् यदेव मोक्षसाधनं वेद विजानाति

यदेव भगवान्वेद तदेव मे ब्रूहीति ॥३॥

**स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥४॥**

**स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जायाःप्रिया**

तदेव साधनं मे मह्यं प्रब्रूहि कथय । अहं मोक्षकामास्मि विरक्ताहं संसारात् तत्साधनाच्च, तस्मात् यन्मोक्षसाधनं तदेव मे कथय वित्तचर्यापि निरर्थिका किं वित्तप्रतिगानेनेति भावः ॥३॥

ततो याज्ञवल्क्यः प्रोवाच बतारे इत्यत्र बत शब्दोऽनुकम्पायाम् तदुपरि अनुकम्पां कुर्वन् प्राह– अरे मैत्रेयि ! त्वं सती साध्वी अनुकूला च यतः प्रियं मनोऽनुकूलं वचनं भाषसे । एहिआगच्छ आस्वोपविश, सावधाना भव । व्याख्यास्यामि मोक्षोपायं कथयिष्यामि । व्याचक्षाणस्यामृतोपायं वदतो मे तदनु निदिध्यासस्व । अर्थतो वाक्यानि निश्चयेन ध्यातुमिच्छ । इति शब्दो वाक्यसमाप्तिं द्योतयतीति । ततो मैत्रेयी प्राह–तदनु भगवानिति ॥४॥

अमृतोपायं प्रत्युत्सुकाया अभिप्रायं ज्ञात्वा स याज्ञवल्क्य उवाच—अरे मैत्रेयि ! न वा नैव कथमपि पत्युः कामाय संकल्पाय । कामपदस्य संकल्पपरत्वात् । संकल्पं सफलयितुम् पतिः प्रियो न भवति पत्युः प्रियत्वम् अहमस्याः प्रियः स्यामिति पतिसंकल्पसाफल्याय न भवति । एवं चाहमस्याः प्रियः स्यामिति पतिसंकल्पाधीनं न पतिप्रियत्वम् किंतु आत्मनस्तु कामाय पतिः प्रियो भवति, किन्तु आत्मनः परमात्मनः कामाय संकल्पात् प्रियो भवतीति । पत्यौ यत् प्रियत्वं तत् परमेश्वरकृपयैव सम्पादितं भवति । मोक्षप्राप्तये प्रयतमानेयं मैत्रेयीति अमृतत्वसाधनदर्शन-

भवत्यात्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणांकामाय पुत्रा प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति। न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म

विषयतया आत्मैव द्रष्टव्य इत्युपदेशं कुर्वाण आत्मपरमात्मैव ग्रहीतव्यः "विद्वान्नामरूपाद्विमुक्तः" "तमेवं विद्वानमृत इव भवति" "नान्यः पन्था विद्यतेऽयनायेत्यादि" श्रुतौ परमात्मवेदनस्यैव मोक्ष कारणात्वावगमात् एवं ब्रह्मत परादात् योऽन्यत्रात्मनो वेदेत्यादि प्रकरणेन परमात्मन एव सार्वात्म्य-प्रतिपादनात् । तथा "आत्मनो वा दर्शनेन" इत्यादि प्रकरणेन परमात्मज्ञानेन सार्वज्ञस्य कथनेन सर्वोपादानत्वप्रतिपादनेनापि प्रकरणेऽस्मिन् द्रष्टव्यत्वेनोप-दिश्यमान आत्मा परमात्मैवेति । ततश्चात्मोपपादकस्यास्य प्रकरणस्य यथा परमात्मपरत्वं वर्णितमिति । अपि च यदि प्रकरणेऽस्मिन् आत्मपदेन जीवस्य ग्रहणमिष्टं भवेत् तदा परमात्मज्ञानेन मोक्षप्राप्तिविधानं सर्वथैवानर्थकं भवेत् । जीवस्याल्पज्ञस्य सर्वदा दोषवत्वेन तज्ज्ञानं संसारायैव केवलं भवेत् न मोक्षाय इति सर्वं मोक्षसाधनं निरर्थकमेव स्यादिति । कृतं पल्लवितेन ।

(न वा अरे जायाय इत्यादि) अत्र जायापदं पुत्रोत्पादयितृकलत्र-परकम् । जायायास्तद्धि जायात्वं यदस्यां जायते पतिरिति स्मृतेः । ततश्च जायायै जायायाः कामाय जाया पत्युः प्रिया न भवति, किंतु आत्मनः परमात्मनः कामाय कामात् संकल्पात्पतिः प्रियो भवतीत्यादिकं सर्वं पूर्ववदेव व्याख्येयम् ।

(न वा अरे ब्रह्मणः कामायेत्यादि) अत्र ब्रह्म इति पदं ब्राह्मणत्वजाति-विशिष्टपरकम् , न तु ब्रह्मपरकं वेदपरकं वा । ब्रह्मणि वेदेऽपि ब्रह्मशब्द-प्रयोगदर्शनात् । ब्रह्मोक्तं परमे व्योमन्नित्यादि । अन्यत्सर्वं पूर्ववदेव व्याख्येयम् । क्षत्रपदं क्षत्रियवर्णपरकं लोकपदं च स्वर्गादिलोकपरकम् न वा

**प्रियं भवति। न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु क्षत्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति। न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि**

अरे सर्वस्येत्यन्तं प्रकरणमतिरोहितार्थकमिति न तद्व्याख्यानाय प्रयोज्यते इति।

एतावताप्रबन्धेन किमिव फलितमिति दर्शनायाह—

(आत्मा वा अरे द्रष्टव्य इत्यादि) अरे मैत्रेयि ! यस्मात् कारणात् पतिजाया सर्वान्तनिष्ठं प्रियत्वं यस्य परात्मनः संकल्पाधीनं तस्मात् कारणात् स परमात्मा द्रष्टव्यः दर्शनविषयीकर्तव्यः अर्थात् पत्यादिनिष्ठ प्रियत्वं यत्संल्पाधीनं तस्य परमात्मनोऽनुकूलतायै आत्मा सर्वनियन्ताचिदचिच्छरीरकः परमात्मा द्रष्टव्यः, स परमात्मदर्शनेन सुप्रसन्नः सन् सर्ववस्तुनिष्ठं प्रियत्वं पतिजायदिवत् पतिजायादितोऽधिकं वा प्रियत्वमापादयितुं दर्शनविषयीकृतः परमात्मा सर्वत्र प्रियत्वमापादयतीत्यर्थः। "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतामिति" श्रुत्यन्तरे श्रवणात्। (पश्यतीति पश्यो जीवो भगवत्प्रसादात् मृत्युं मारकं कृतान्तं न पश्यति। यदा मृत्युमेव न पश्यति तदा का कथा रोगस्य दुःखस्य भगवदाराधनेन लब्धभगवत्प्रसादस्य जीवस्य कृतान्तादिजनितभयाभावो भवतीति श्रुत्यन्तरार्थः) एव स परमात्मा श्रोतव्यः श्रावणज्ञानविषयीकर्तव्यः, मन्तव्यो मननादिविषयीकर्तव्यः, तथा निदिध्यासितव्यो ध्यानविषयतामापादनीयः। अयं भावः स्वाध्यायोऽध्येतव्य इत्यध्ययनविधौ स्वाध्यायस्यार्थपरत्वादधीतवेदोऽधिकारी प्रयोजनं तदर्थदर्शनात् तादृशार्थनिर्णयाय स्वयमेव गुरुमुखात्सन्न्याययुक्तार्थग्रहणरूपे श्रवणे प्रवर्तते एवेति श्रवणस्य स्वयमेव प्राप्तत्वात् न

**प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो**

श्रोतव्य इति श्रवणे विधिः अप्राप्तार्थप्रापकस्यैव विधित्वात् । किन्तु अन्यतः प्राप्तस्य श्रवणस्यायमनुवादः । एवं मन्तव्य इत्यनेन न मननस्य विधानम् अपितु स्वात्मन्येवमेवमित्यादियुक्तिभिः श्रुतस्यार्थस्य यत्प्रतिष्ठापनं तल्लक्षणमननस्य श्रवणप्राप्तार्थपरिष्ठापकत्वेन प्राप्तत्वात् । अपितु अनुवादकत्वमेव । किन्तु निदिध्यासितव्य इत्यनेनानवरतभावनालक्षणध्यानमेव विधीयते तस्य शास्त्रान्तरेण प्रकारान्तरेण वाऽप्राप्तत्वात् स्मृतिलंभे सर्वग्रन्थीनां विप्रमोक्ष इत्यादिना भगवद्ध्यानस्यैव मोक्षाव्यवहितपूर्ववर्तित्वस्य प्रतिपादनात् यद्यपि "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इत्यादिशास्त्रेण दर्शनस्यापि मोक्षं प्रतिकारणत्वमवधारणेन उभयोरप्येकार्थकत्वमावश्यकम्, तथापि चाक्षुषज्ञानवाचि दृश्धातोः प्रयोगस्य "न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्" इत्यादिनाऽचाक्षुषज्ञानविषये ब्रह्मणि असम्भवात् दर्शनशब्देन लक्षणया दर्शनसमानाकारकमतिविशदज्ञानमेव प्रतिपाद्यते न तु चाक्षुषत्वविशिष्टं ज्ञानम् । ततश्च द्रष्टव्यो निदिध्यासितव्य इत्याभ्यां पदाभ्यां दर्शन समानाकारकं ध्यानमेव विधीयते । अतो द्रष्टव्य इत्यादि पदैर्दर्शनश्रवणमननानां न विधानमपितु ध्यानापरपर्यायं निदिध्यासनमेव विधीयते तस्याप्राप्तत्वात् मोक्षं प्रतिकरणत्वावधारणाच्चेति । एतावता महता परिकरेण निदिध्यासनं विधीयते इति प्रतिपादितं तस्य किं फलमित्याशंकायामाह–

(मैत्रय्यात्मनो वाऽरे इत्यादि) अरे मैत्रेयि ! अस्य परमात्मनो दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं ज्ञातमेव भवति । अत्र विज्ञानेनेति

**मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ॥५॥**

शब्दो निदिध्यासनस्य सूचकः स्थानप्रमाणात् पूर्वमन्त्रावयवे चतुर्थस्थाने निदिध्यासनम् । मन्त्रान्ते विज्ञानेनेति तस्मात्स्थानप्रमाणात् विज्ञानेनेति पदं निदिध्यासनपरकमेव । एतादृशे परमात्मनि दर्शनाकारकातिविशदज्ञान-विषयीकृते सति तस्य भगवतः प्रसादात् निदिध्यासितुः पुरुषस्य सर्वमेव वस्तु विदितं भवति । अनुकूलतया विदितं सर्वं प्रियमेव भवतीति भावः । अथवा निदिध्यासितव्यतया निर्दिष्टे परात्मनि जगन्निष्ठकार्यतानिरूपित-कारणत्वलक्षणं दर्शयति—

( आत्मन इत्यादि ) यथोपादानोपादेययोर्मृद्घटयोरभेदः, भेदे उपादानोपादेवभावस्यादर्शनात् न हि भवति मृत्तिका घटस्यो-पादानमिति जगदुपादानपरमात्मज्ञाने नोपादेयलक्षणमिदं सर्वमेव विदितं, यथा मृत्तिकाज्ञाने जाते मृतिकाकार्यं घटशरावादिकमयत्नत एव विज्ञातं भवति, तद्वत्सर्वोपादानलक्षणे परमात्मनि ज्ञाते तत्कार्यं सर्वं विदितं भवत्येवेति । अत्रेदं सर्वमिति च पदद्वयम् स्थूलावस्थचिदचिद्विशिष्टं ब्रह्म-बोधकम् । आत्मन इत्यत्रात्मपदं च सूक्ष्मचिदचिद्विष्ट ब्रह्मबोधकम् । यद्यपि स्थूलसूक्ष्मयोर्विशेषणयोर्न सर्वथाऽभेदस्तथापि विशेष्यस्याभिन्नत्वात् । तादृशविशेषणविशिष्टस्याप्यभेदः फलित एवेति सूक्ष्मचिदचिद्विशिष्ट-परमात्मज्ञाने जाते स्थूलावस्थस्य सर्वस्य विज्ञानं भवतीत्युपपद्यत एवेति । एतावता परमात्मनि सर्वजगदुपादानत्वं व्यवस्थापितं भवति । अत्र-निदिध्यासितव्य इति वचनेन ब्रह्मणि सर्वकार्यनिष्ठजन्यतानिरूपितोपादा-नत्वकथनात् जगत्कारणत्वं परमेश्वरे परविद्यया विषयीकृतमिति भावः ॥५॥

**ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं**

अथ कारणनिष्ठगुणानामनुवर्तनं दृश्यते यथा शुक्लतन्तुजनितपटे शौक्लस्यैवानुवर्तनात् । तथा च यदि ब्रह्म जगत उपादानं भवेत्तदा ब्रह्मगताचेतना जगति समवेयात् न तु चेतनायाः सम्बन्धो जगति एवं चेत्सर्वमपि जगत् चेतयेत् । अतो ब्रह्म न जगत उपादानं तदभावे कथं ब्रह्मणि विदिते सर्वं विदितं भवतीति कथ्यते । जडजगत्परमात्मनोर्भेदः प्रत्यक्षसमधिगत एव । चेतनवर्गस्यापि ततो भेदः ज्ञायते एव । नाहं ब्रह्म अल्पज्ञत्वादित्यादि प्रमाणैरिमां शंकांनिराकर्तुं जगद्ब्रह्मणोरुपादानोपादेययभावं च दर्शयितुं श्रुतिराह—

(ब्रह्म तं परादादित्यादि) अत्र मन्त्रे एकं ब्रह्मपदं ब्राह्मणत्वजातिविशिष्टवर्णपरकम् । अपरं च तत् परमात्मपरकम् । यो ब्रह्म ब्राह्मणवर्गः आत्मनोऽन्यत्र परमात्मभिन्ने स्थितं वेद जानाति न तु परमात्मनि स्थितम्-ब्रह्मात्मकं स्वनिष्ठं ब्राह्मणवर्णं विजानाति तं परमात्मभिन्ने स्थितोहमिति जानानं ब्रह्मपरमात्मा परादात् पराकुर्यात् अभिभवेदित्यर्थः । अन्यत्वेनावगतो ब्राह्मणवर्णं एव तं संसारभाजं कारयति । अहं परमात्मनि स्थितः परमात्मोपादानक इति ज्ञानमेव सम्यग् ज्ञानं, न तु परमात्मव्यतिरिक्तेऽहमस्मीति ज्ञानम् सम्यग् ज्ञानं, ततश्चपरमात्मअस्थितत्वे ब्रह्मपराभवनिन्दाश्रवणात् परमात्मनिष्ठत्वं सर्वस्य स्थितं भवति ततश्च सर्वजगदुपादानत्वं परमात्मनि गम्यते । इत्थं च परमात्मज्ञानात् कार्यकारणयोरभेदात् सर्वं विदितं भवतीति सिद्धम् । एवमेवार्थः क्षत्रादिपदघटितमंत्राणामपि करणीय इति ।

ननु सर्वं चिदचिदात्मकं वस्तु ब्रह्माधिकरणकतया ब्रह्मात्मकं

क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्व्वं यदयमात्मा ॥६॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्यांश्छब्दाञ्छक्नुयाद्ग्रहणाय

भवतु, परंतु ब्रह्मात्मकस्य शरीरलक्षणस्य जगत्प्रपंचस्य शरीरिभूतब्रह्मभिन्नत्वात् । अवयवावयविनोर्भेदस्यान्यत्र व्यवस्थापनादिति शरीरिभूतब्रह्मज्ञानेन शरीरात्मकजगतो विज्ञानाभावात् परमात्मनि विदिते सर्वमिदं विदितं भवतीति श्रुतिनिर्देशः कथमुपपद्यते ? इत्याशंक्य यदा सर्वं ब्रह्मशरीरं तदा शरीरवाचकशब्दानां शरीरिपर्यन्तबोधनात् । इदं सर्वमिति शब्दाभ्यामन्यशब्देनापि चिदचिच्छरीरकं ब्रह्मैव प्रतिपादितं भवतीत्यभिप्रायेणाह—

(इदं ब्रह्मेदमित्यादि) इदं ब्राह्मवर्णत्वजातिविशिष्टमिदं क्षत्रं लोकाः स्वर्गादयो देवा इंद्रादय इमानि परिदृश्यमानानि सर्वाणि तत्सर्वमयमात्मा परमात्मैव । एवं चात्मनि विज्ञाते इदं सर्वं ज्ञातमेव भवति, अर्थात् सर्वशरीरकः परमात्मा विदित एव भवति । तस्मात् श्रुतिनिर्देशो नानुपपन्न इति ॥६॥

यथोक्तप्रकारेण जगत्कारणत्वविशिष्ट ब्रह्मोपासनं दर्शयित्वोपासनोपकरणभूतमनःप्रभृतिकरणानां नियमनं दर्शयितुमुपक्रमते—

(स यथेत्यादि) अयं भावो यावत्पर्यन्तं मनःप्रभृतिज्ञानकरणं स्ववशे न स्यात्, तावत्पर्यन्तं भगवत उपासनं कथमपि न संपद्येत । अतः प्रथमतो मनःप्रभृतीनां निग्रहोपायः प्रदर्शनीयः उपायद्वारा निगृहीतमनसोपासनं संभवात् । "तस्येन्द्रियाण्यवश्यानि दुष्टाश्वाइव सारथेः । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः" इत्यादिनेन्द्रियवश्यावश्यत्वंप्रदर्श्य न सतत्पदमाप्नोति संसारं चाधिगच्छतीत्यादिभिः काठके विस्तरेण प्रतिपादनादिति । स यथा येन प्रकारेण हन्यमानस्य दुन्दुभेर्दण्डादिना ताड्यमानस्येत्यर्थः । दुन्दुभेरित्यत्र येयं षष्ठी सा अनादरे रुदति रुदतो वा

शब्दो गृहीतः ॥७॥

...भेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥७॥

स यथा शंखस्य ध्मायमानस्य न बाह्यांश्छब्दाञ्छ-क्नुयाद् ग्रहणाय शंखस्य तु ग्रहणेन शंखध्मस्य वा शब्दो गृहीतः ॥८॥

स यथा वीणायै वाद्यमानायै न बाह्यांश्छब्दाञ्छक्नुयाद् ग्रहणाय

प्राव्राजीदितिवत् । बाह्यान् बहिर्गतान् शब्दान् ग्रहणाय निरोद्धुं न शक्नुयात् न समर्थो भवेत् । अत्र ग्रहणशब्दो नोपादानपरकोऽपितु निरोधपरकः गृह्यते स्ववशे स्थाप्यते इति ग्रहणमिति व्युत्पत्तेः । दुन्दुभेस्तु ग्रहणे न निरोधेन दुन्दुभ्याघातस्य वा ग्रहणेन निरोधेन तद्गतः शब्दोऽपि गृहीतो निरुद्धो भवत्येव । अयमर्थः यथा दण्डादिना मृदंगादिके ताडिते सति ततो निःसरतः शब्दान् निरोद्धुं न कोऽपि शक्तो भवति परन्तु दुन्दुभेर्निरोधेन तदाघातकस्य पुरुषस्य वा निरोधेन संयोगादेर्वानिरोधेन तदीयाः शब्दा अनायासेनैव निगृहीता भवन्ति । तद्वत्प्रकृते यावत्पर्यन्तमिन्द्रियं स्वस्वविषये प्रवर्तते तावत्पर्यन्तं बाह्यार्थविषयकज्ञानं दुर्निवारमेव विषये वैराग्येण वेन्द्रियनिरोधेन वा परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञानं कथमपि नोत्पद्येत । ततश्चविरोधिनोऽभावात्प्रयततः पुरुषस्य परमात्मोपासनेन परमात्मसाक्षात्कारो अबाधित एवेति भावः ॥७॥

(स यथा शंखस्येत्यादि) यथा येन प्रकारेण ध्मायमानस्य वायुना पूर्यमाणस्य शंखस्य संबधिनो बाह्यान् बहिर्गतान् शब्दान् ग्रहणाय निरोद्धुं न शक्नुयात् न समर्थो भवेत् शंखस्य शब्दनिमित्तस्य ग्रहणेन निग्रहणेन निरोधेनेत्यर्थः शंखध्मस्य वादकस्य पुरुषस्य वा निरोधेन शब्दो गृहीतो निरुद्धो भवति । तद्वत्प्रकृते इन्द्रियनिरोधेन बाह्यार्थज्ञानाभावो भवतीति ॥८॥

(स यथा वीणायै इत्यादि) वीणायै इत्यत्र चतुर्थी षष्ठ्यर्थे न ...रितिभारः, तत्र वीणा लोकप्रसिद्धवाद्यविशेषलक्षणा । अन्यत्सर्वं

वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥९॥

स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि

पूर्वमन्त्रवदेव ज्ञातव्यमिति ॥९॥

एतावता प्रबन्धेन सामान्यरूपेण भगवति सर्वकारणत्वं प्रदर्शितमितः परं विशेषरूपेण सर्वकारणत्वं भगवति प्रदर्शयितुमुपक्रमते—

(स यथेत्यादि) अत्र एध शब्दोऽकारान्त इन्धनवाचकः आर्द्रो जलमिश्रितः अग्निर्वह्निः अत्रार्द्रैधाग्निग्रहणं धूमस्य निमित्तोपादानो-भयोर्ग्रहणार्थम् । धूमोत्पत्तौ अग्निर्निमित्तकारणम् इन्धनन्तूपादानकारणम् एतत्स्वमतेन । न्यायमते तु उभयमपि धूमोत्पत्तौ निमित्तमेव । उपादानं तु तत्तदवयवा एवेति । यथा येन प्रकारेण आर्द्रैधाग्नेर्जलमिश्रितकाष्ठाग्निस-सकाशात् । अभ्याहितात् फूत्कारवीजनादिना प्रज्वलितात् पृथक् असमाना धूमाः विनिश्चरन्ति निर्गच्छन्ति प्रादुर्भवन्तीत्यर्थः । अयमाशयो यथा प्रकाशकादिगुणयुक्तादभिवह्नेः सकाशात् निमित्तापेक्षविजातीयाः कारणापेक्षया धूमाः कार्यवर्गा समुत्पद्यन्ते, एवम् एकविधात् परमात्मनः सकाशात् अदृष्टादिनिमित्ताद् विचित्राणि कार्याणि समुत्पद्यन्ते इत्यर्थः । दृष्टान्तं दर्शयित्वा दार्ष्टान्तिके योजयति—

(एवं वा अरे अस्येत्यादि) अरे मैत्रेयि ! एवं वह्निधूमदृष्टान्तेनास्य प्रकान्तस्य महतो व्यापकस्य भूतस्य परमात्मनः एतत् वक्ष्यमाणम् ऋग्वेदादिकं निःश्वसितं निःश्वासमिवोत्पन्नम् । एतन्निःश्वसितम् महतो भूतस्येत्युक्तं तत्र किमेतत् तत्राह—

(ऋग्वेद इत्यादि) ऋग्वेदादारभ्य व्याख्यानान्तानि सर्वाण्यपि अस्य

व्याख्यानान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥१०॥

स यथा सर्वासामपां समुद्र एकायनमेवं सर्व्वेषां स्पर्शानां त्वगेकायनमेवं सर्व्वेषां रसानां जिह्वैकायनमेवं सर्व्वेषां गन्धानां नासिके एकायनमेवं सर्व्वेषां रूपाणां चक्षुरेकायनमेवं सर्व्वेषां

महतो भूतस्य नि:श्वसितानि नि:श्वासवदेवायत्नत एवोद्गतानि यथा श्वासादिग्रहणेन भवत्यल्पीयानप्यायासो लोकानां तथैवायत्नत एव भगवता निर्मितानि । यद्यपि सूत्रादीनि भगवतो व्यासादुद्गतानि । इत्येवं पुराणेषु प्रसिद्धेस्तथापि । "यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव" वेत्यादि स्मृतिबलेन भगवतो व्यासस्य परमात्मांशत्वात् भगवन्नि:श्वसितोक्तिः सम्यगेवेति । यद्यप्यत्र वाचकसृष्टेरेव निरूपणं कृतमिति प्रतिभाति, तथापि अन्यत्र वाच्यसृष्टेः प्रतिपादनात् ततस्तमपकृष्य तद्योजनमिहापि करणीयमेव । अनेन पूर्वं यत् सामान्यतो जगत्कारणत्वं दर्शित तदत्र विशेषरूपेण प्रपंचितमिति ॥१०॥

स यथा दुन्दुभेर्हन्यमानस्येत्यादि प्रकारेण परमात्मोपासनोपकरणभूतकरणसमुदायस्य नियमनं सामान्यतः कथितं, तदेव विशदयति—

(स यथा सर्वासामपामित्यादि) स यथा येन प्रकारेण सर्वासामपां नदीतडागादिगतजलनाम् समुद्र उदकराशिरेवैकायनम् आधार एवमेव सर्वेषां मृदुकठिनत्वादीनां स्पर्शानां त्वगेकायनम् । अर्थात् यथा समुद्रो अनेकविधानि जलानि गृह्णाति स्वस्मिन्व्यवस्थापयति तथैव त्वगिन्द्रियमपि संख्यातीतान् सर्वानपि गृह्णाति । ततश्च त्वगिन्द्रियस्पर्शविषयकव्यापारा अनेक एवेति । एवं सर्वेषां मधुराम्ललवणकटुत्वादिसर्वरसानां पृथिवीजलनिष्ठानां जिह्वैवैकायनम् रसनेन्द्रियद्वारा सर्वे रसा रस्यमाना भवन्ति । रसनाव्यापारो अनेकप्रकारको भवतीत्यर्थः । एवं सर्वेषां सुरभि-

**शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्व्वासां विद्यानां हृदयमेकायनमेवं सर्व्वेषां कर्म्मणां हस्तावेकायनमेवं सर्व्वेषामानन्दानामुपस्थ एकायनमेवं सर्व्वेषां विसर्गाणां पायु-**

दुरभिगंधानां पृथिवीमात्रसमवेतानां नासिका तादृशगोलकविशेषेविद्यमानं घ्राणेन्द्रियमेवायनं ग्राहकं गन्धविषयकघ्राणव्यापारोऽनेकप्रकारक इति । एवं सर्वेषां नीलपीतादिभेदभिन्नानां रूपाणां चक्षुरिन्द्रिय गोलकविशेषनिष्ठमेवायनं ग्राहकं रूपविषयक एवं सर्वेषां तीव्रमन्दादिमेन भिन्नानां शब्दानामाकास समवेताना श्रोत्रं श्रोत्रेन्द्रियमेकायनं ग्राहकम् । शब्दविषयकः श्रोत्रप्रकारोऽनेकधिध इति चक्षुर्व्यापारोऽनेकप्रकारको भवतीत्यर्थः । एवं सर्वेषां संकल्पानां मनोधर्माणां कामसंकल्पविचिकित्साप्रभृतीनां मनो मन इन्द्रियमेकायनम् संकल्पादिकान् सर्वानेव मनोधर्मान् मनो गृह्णाति ततश्च संकल्पादिविषयकमनोव्याराश्रसंख्याता एव भवन्तीत्यर्थः । एवं सर्वासां विद्यानां विज्ञानानां हृदयमेकायनम्, तत्र निश्चयाकारकावस्थाविशिष्टं मन एव हृदयम् । एकमेवान्तःकरणं यदा संकल्पाद्यवस्थाविशेषविशिष्टं भवति, तदा मन इति संज्ञां लभते, यदा च तदेव निश्चयान्तकावस्थाविशेषविशिष्टं भवति तदा हृदयमिति व्यपदिश्यते, ततश्च विज्ञानविषयको हृदयस्य विविधप्रकारको व्यापारो भवतीति, यथोक्तप्रकारेण ज्ञानेन्द्रियस्य तत्तद्विषयकव्यापारप्रकारं दर्शयित्वा कर्मेन्द्रियव्यापारं दर्शयितुमुपक्रमते–

(एवं सर्वेषां कर्मणामित्यादि) एवं ज्ञानेन्द्रियवदेव सर्वेषां विविधप्रकाराणां कर्मणां क्रियविशेषाणामादानादीनां हस्तावेवैकायनम्, हस्तौ एव तत्तत्कर्मणां ग्राहकौ । ततश्च कर्मविषयककर्मेन्द्रियहस्तव्यापारा अनेकप्रकारका इत्यर्थः । एवं सर्वेषामानन्दानां पुष्पस्रक्चन्दनवनितादिविषयविशेषसंपर्कजनितानामुपस्थ एवैकायनम्, आनन्दग्राहकमुपस्थेन्द्रियम् ।

**ऐकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्व्वेषां वेदानां वागेकायनम् ॥११॥**

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत**

ततश्चानन्दविषयकोपस्थव्यापारा अप्यनेकप्रकारका एव भवन्ति। आनन्दस्य तत्तद्विषयसम्बन्धजनिततया विषयभेदात्तदीयव्यापारा अप्यनेक एवेति। एवं सर्वेषां विसर्गाणां त्यागानां मलादिविषयकाणां पायुरेकायनम् विसर्गग्राहकं पायुरिन्द्रियं ततश्च तदीयव्यापारा अप्यनेक एवेति। एवं सर्वेषामध्वनां गन्तव्यमार्गाणां पादौ एवैकायनं ग्राहकभूताश्च गमन-विषयकपादव्यापारा अप्यनेक एवेति। एवं पूर्वप्रदर्शितक्रमेण सर्वेषां वेदानां वाक् वागिन्द्रियमेवैकायनम्, शब्दग्राहकं वागिन्द्रियं ततश्च वाचो व्यापारा अप्यनेकविधा एव। ततश्च सर्वेषामिन्द्रियाणां वृत्तिविशेषा अनन्ता एव भवन्ति। एते च वृत्तिविशेषा विषयविषयका आत्मसाक्षात्कार-प्रतिबन्धका एव। यद्यपि बहव एतादृशा वृत्तिविशेषाः संति ये स्वर्गादि-दायकास्तथापि आत्मसाक्षात्कारप्रतिबन्धकत्वं सर्वेषामविशिष्टमेव तदुक्तं "शृंखला स्वर्णजातापि बन्धनाय न संशयः" इति। एवं च वृत्तिविशेषाणां सर्वेषामात्मसाक्षात्कारप्रतिबन्धकत्वे नात्मसाक्षात्कारार्थिना एते वृत्ति-विशेषा विषयप्रवणा निरोद्धव्या एव। ततश्च स यथा दुन्दुभेर्हन्यमानस्येत्यादि प्रकरणेन कथितं परमात्मोपासनोपयोगिकरणग्रामनियमनं विवृत्तं भवति। इन्द्रियाणां निरोधे प्रतियोगिविधया तज्ज्ञानस्यावश्यकत्वे न तद्विवरण-मावश्यकमेवेति भावः ॥११॥

कस्यामप्यवस्थायां जीवो न स्वतंत्रः किंतु सर्वदैव परमात्मनिष्ठ-तया तदधीन इति ज्ञापनाय जीववाचिविज्ञानघनादिपदेन परमात्मानं निर्दिशन् अमृतत्वोपायप्रवृत्तौ जीवं प्रोत्साहयितुं भूतसमुदायात्मक-शरीरोत्पादविनाशानुविधायिनः संसारभाजो भवतो जीवस्यापरिच्छिन्न-

**नाहास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय**

ज्ञानैकाकारतां दर्शयितुमुपक्रमते–

(स यथा सैन्धवखिल्य उदके प्रास्त इत्यादि) यथा येन प्रकारेण सैन्धवखिल्यो लवणखंड उदके जले प्रास्त जले प्रक्षिप्तो लवणखण्ड इत्यर्थः उदकमेव जले एवानुविलीयेतानुप्रविश्य जलाकार एव भवति ।

(न हास्योद्ग्रहणायैव स्यात्) उदकात् प्रविविच्य लवणं स्वरूपतो द्रष्टुं न कोऽपि समर्थो भवति । यतो यतो यस्मात् कस्मात्चिदपि स्थानात् उदकमुपाददीत गृह्णीयात् ऊर्ध्वदेशात पार्श्वात् अधोभागाद्वा ततस्ततस्तत्तोयं लवणमेव भवति लवणस्वादेनैव गृहीतं भवति । अयं भावः यथा सैन्धव-शकलं जले प्रक्षिप्तं जलमनुप्रविश्य विलीनं भवति ततो जलविलीनस्य लवणस्य जलात्पृथक्कृत्य तत् लवणं नैव कोऽपि ग्रहीतुं शक्तो भवति, परंतु तदुदकं यस्मात् यस्मात् स्थानात् मध्यतः पार्श्वतो वा गृह्णीयात् तत्तत्तोयं लवणमेव भवतीति । एवं दृष्टान्तं दर्शयित्वा दार्ष्टान्तिके तं योजयितुमाह–

(एवं वा अरे इत्यादि) अरे मैत्रेयि ! एवमेव लवणदृष्टान्तवदेवेदं महद्भूतमनन्तं परिच्छेदवर्जितम् अपारं गुणतोऽपि परिच्छेदरहितम् ब्रह्म विज्ञानघन एव स परमात्मा जीवशरीरकतया एतेभ्यो देहाद्याकारपरिण-तेभ्यो भूतेभ्यः पृथिव्यादिभ्यः समुत्थाय प्रादुर्भूय तान्येवानुविनश्यति उत्पाद्यमानेषु भूतवर्गेषु स्वयमुत्पाद्यमानो नश्यत्सु भूतेषु अनु पश्चात्स्वयं विनश्यति विनष्टो भवति, अत्यन्तसंकुचितज्ञानवान् भवति । शरीरोत्पत्ति-विनाशानुविधायित्वात् उत्पत्तिविनाशवानिव भवति । नात्र विनाशोऽत्यं-तादर्शनम्, किंतु अतिशयेन ज्ञानसंकोचः उत्पत्तिश्च विकासः प्रादुर्भाव इति ।

( न प्रेत्य संज्ञास्तीत्यादि ) प्रेत्य मृत्वाऽन्तिमशरीरवियोगं प्राप्य मुक्तावस्थायां स्वाभाविकापरिच्छिन्नज्ञानसंकोचस्याभावे संज्ञा नास्ति । तत्र

**तान्येवाऽनुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१२॥**

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति स**

संज्ञेत्यत्र संशब्द एकीकारार्थकः धात्वर्थो ज्ञानम् । ततश्च भूतसमुदायेनैकीकृत्य ज्ञानमेव संज्ञाशब्दार्थः । यद्यपि महद्भूतमनन्तमपारमित्यनेन प्रतिपादितस्यैव ब्रह्मणो विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थायेति जीवत्वसंसारित्वकथनं मुख्यमेव भवतु विज्ञानघनो जीवशरीरक इति उक्ते व्याख्यानं क्रियते। तथापि "निरनिष्ठो निरवद्य" इत्यादि श्रुत्यावेदितस्य भगवतः संसारित्वसंपादनस्याशक्यत्वात् विज्ञानघनो जीवशरीरक इत्यर्थस्यावश्यकत्वात् कल्पना गुरुतरा न भवति "प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि। अदृष्टशतमात्रोऽपि न कल्प्यो निःप्रमाणक" इत्यभिधानात् । अत एव मोक्षधर्मेऽपि कथितम् । "अन्यश्च राजन्स परस्तथान्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति एक एव हि साधवः" इत्यादिना शरीरशरीरवतोः भेदेऽपि शरीरमप्यप्रविष्टस्य शरीरिणः परमात्मनः एकत्वात् देहान्तरावस्थितिमूलकः प्रकार्यैकत्वविवक्षयाऽभेदव्यवहारो भवति । अयमेकः पुरुष इति एवं च चेतनवर्गस्य भगवच्छरीरतया जीववाचकेन विज्ञानघनशब्देन परमात्मप्रतिपादनं जीवधर्मभूतोत्पत्तिविनाशात्मकधर्मवत्वं च परमेश्वरस्य न कथमपि विरुद्धं भवतीति ॥१२॥

पूर्वोक्तप्रकारेण याज्ञवल्क्यस्य वचनं श्रुत्वा सा मैत्रेयी होवावोक्तवती। भगवानत्रैव या माममूहत् मोहं प्रापितवती ज्ञानैकाकारस्य विज्ञानशब्दितस्यात्मनो मोक्षावस्थायां ज्ञानाभावो विरुद्ध इति मे मोहो जात इत्यर्थः। यद्यपि देहात्मैक्यभ्रममूलक एव संज्ञाशब्द इति विरोधो न भवतीति मोहप्राप्त्यभिधानमयुक्तं तथापि यथोक्ताभिप्रायस्यानभिज्ञानान्मोहं प्राप्तवतीव मैत्रेयी यथोक्तवचनमुवाचेति भावः। अभिप्रायानभिज्ञाया मैत्रेय्या माममू-

**होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥१३॥**

**यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं शृणोति तदितर इतरमभिवदति तदितर**

इदिति वचनं श्रुत्वा स याज्ञवल्क्य उवाच–

(अरे मैत्रेयि ! नाहं मोहं ब्रवीमि।) न प्रेत्य संज्ञाऽस्तीत्येवं रूपेण मोहं नाहं ब्रवीमि । किन्तु इदं विज्ञानघनपदबोध्यं पूर्वनिर्दिष्टमहद्भूतं प्रेत्यापि विज्ञानाय अलम् विज्ञातुं पर्याप्तमित्यर्थः । एवं च मोक्षावस्थायामपि ज्ञानं तस्य विद्यते एव ज्ञानवत् एव मोक्षप्राप्तस्य तस्य प्रेत्य न संज्ञाऽस्तीति पूर्वककथितः संज्ञाभावः, देहात्मैक्यविषयकभ्रमाभावाच्चेति ॥१३॥

पूर्वकथितप्रकारेण मोक्षावस्थायां देहे आत्मभ्रमो य आसीत्स निवृत्त इति दर्शयित्वा तस्यामवस्थायां जीवस्य परमात्मनिष्ठताभ्रममपवदितुमुपक्रमते–

(यत्र हीत्यादि) यत्र यस्यामवस्थायां द्वैतमिव भवति स्वनिष्ठतया परमात्मनः पार्थक्यमिव भवति न तु वस्तुतः पार्थक्यं जीवस्य परमात्मना । स्वतंत्र इव जीवः । वस्तुतो जीववर्गः परमात्मनाऽपृथग्भूतत्वात् परमात्माधीन. किंतु अहं स्वतंत्र इति यदा भानं भवति, तत्तदा तदवस्थायां इतरो भिन्नात्मक इतरं भिन्नात्मकमितरेण स्वतन्त्रेण करणेन घ्राणेन जिघ्रति गन्धं ग्रहणं करोति । तत्तदा तदवस्थायामितरः स्वतन्त्र इव जीव इतरः स्वतन्त्र-इव स्वतन्त्रेण चक्षुषा पश्यति चक्षुर्जन्यज्ञानविषयतामापादयति । तथा इतरो भिन्नात्मक इतरं भिन्नात्मकं स्वतन्त्रेणेतरेणाभिवदति अभिवदनक्रियां सम्पादयति । इतर इतरमभिश्रृणोति इत्यादिकं पूर्वदेवेति । यत्र तु यस्यामवस्थायाम् अस्य जीवस्य सर्वमात्मैवाभूत् परमात्मस्वरूपमेव सर्वं

**इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभू-त्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कं शृणुयात्तत्केन कमभिवदे-**

जीवाजीवादिकमिति ज्ञानमभूत् तस्यामवस्थायां केन स्वतन्त्रेण करणेन कं स्वतन्त्रं कर्मजातं कः स्वतन्त्रो जीवो जानीयात् सर्वत्र परमात्माभेद-दर्शनात् । सदैकात्मकस्य चराचरस्य जगत्प्रपंचस्य कालभेदमूलकभिन्नाभिन्ना-त्मकत्वस्यासंभवात् सर्वमात्मैवाभूदिति अस्यैकात्मकत्वेन ज्ञातमभूदित्येवार्थः लेशतोऽपि यस्यात्मभेदप्रतीतिर्विद्यते तस्य कर्तृकरणादिषु भिन्नात्मकत्व-प्रतीतिरनुवर्तते, यस्य तु आत्मभेदप्रतीतिर्यदा सर्वथापि न विद्यते तस्य तदा कर्तृकर्मकरणादिषु भिन्नाकारिका प्रतीतिः कथमपि न विद्यते इति भावः ।

(येनेदमित्यादि) येन परमात्मना सुप्रसन्नेनानुकंपितो जीवः सर्वजड़-चिदात्मकं वस्तुजातं विजानाति साक्षात्करोति । यथापरमात्मा स्वावयव-भूतं सर्वमेव वस्तुजातं सर्वदैव साक्षात्करोति तद्वत् भक्त्या तोषितः परमेश्वरो यदुपरि कृपालेशं करोति सोऽपि जीवः सर्वज्ञो भवति । "यमेवैष वृणुते" इत्यादि श्रुत्यन्तरात् । यत्प्रसादाज्जीवः सर्वज्ञतामादधाति स्वस्मिन् तं तथाभूतं परमात्मानं करणेन हेतुना वा विजानीयात् "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इतिवत् परमात्मनः प्रसादमन्तरेण स परमात्मा दुःखबोधो भवतीत्यर्थः ।

(विज्ञातारमित्यादि) अरे मैत्रेयि ! विज्ञातारं सर्वशक्तिसमन्वितं सर्वदैव सर्वज्ञं परमात्मानं केन हेतुना ध्यानोपासनपरमात्मप्रसादातिरिक्त-केवलया यज्ञाद्युपायेन विजानीयत् । ध्यानपरमात्मप्रसादातिरिक्तेन केवल-यज्ञाद्युपायेन न कोऽपि तं ज्ञातुं समर्थः । अत्र प्रकरणे प्रकरणप्राप्त-जगत्कारणत्वादिलभ्यः सर्ववित्परमात्मैव गृह्यते । एतादृशं परमात्मानं को विज्ञातुं केन शक्नुयात् तत्र परमात्मप्रसादमन्तरेण परमेश्वरस्य दुर्गमनत्व-परकं तं केन विजानीयादिति पूर्ववाक्यांशः तथा उपासनातिरिक्तकेवल-

इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्व्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कं शृणुयात्तत्केन कमभिवदेत्तत् केन कं मन्वीत तत् केन कं विजानीयाद्येनेदं सर्वं विजानाति तं

यत्नदर्शनादिकारणान्तरनिषेधपरकं विज्ञातमरे केन विजानीयादित्युत्तरवाक्यम् । एवं च परमात्मनः कृपा परमात्मन उपासनमेतदुभयमपि परमावश्यकमिति वाक्यद्वयेनावेदितं भवति । तत्र परमेश्वरप्रसादः परमेश्वरोपासनसाध्यः यत् परमात्मज्ञानं तत् किमाकारकमिति प्रश्ने । दर्शनसमानाकारकध्यानरूपावगतिरेव भगवत्प्रसादो भगवदुपासनासाध्य इति केचित् । अन्ये तु मोक्षकालीना देशविशिष्टपरमात्मसाक्षात्काररूपैवेति । एतदुभयमपि युक्तमेव साम्प्रदायिकैरुभयोरपि स्वीकृतत्वात् इति । इति शब्दो याज्ञवल्क्यस्य प्रवचनसमाप्तिबोधक एतावानेव याज्ञवल्क्योपदेश इति । अत्र प्रकरणप्रतिपाद्यो जीवः परमात्माएवेति संशये जीव एवेति पूर्वपक्षस्तथा हि उपक्रमे प्रतिज्ञाया वित्तादिप्रियसम्बन्धित्वरूपजीवलिंगस्य विद्यमानत्वात् जीव एव । एवं मध्ये विज्ञानघन एवैतेभ्यः समुत्थाय तान्येवानुविनश्यति" इत्यादिना शरीरानुबन्धिजन्ममरणलक्षणजीवलिंगस्य प्रतिपादनात् तथावसाने "विज्ञातारमरे केन विजानीयादिति" विज्ञातृत्वलक्षणजीवलिंगस्य विद्यमानत्वादिदं प्रकरणं जीवस्यैव बोधकं न तु परमेश्वरस्येति । यद्यपि स्थले स्थले परमेश्वरलिंगमपि दृश्यते तथापि तत्कथंचित् जीवपरकतयैव नेयमिति प्राप्ते एवमुच्यते योऽयं वाक्यसन्दर्भः स परमात्मपरक एव न तु जीवपरकस्तथा हि अमृतत्वस्य तु नाशास्ति वित्तेन "इत्यादिना याज्ञवल्क्यकथनानन्तरं" येनाहं नामृता स्यां किमहन्तेन कुर्याम्" इत्यमृतत्वकारणमन्विष्यमाणायै मैत्रेय्यै "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिना द्रष्टव्यत्वेन समुपदिष्टस्यात्मनः परमेश्वरत्वमेव स्वीकर्तव्यम् परमात्मज्ञानस्यैव मोक्षजनकत्वात् "तमेव विदित्वातिमृत्युमेति

**केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१४॥**

**इति बृहदारण्यकोपनिषदि द्वितीयाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥**

नान्यः पन्था विद्यतेऽयनाय" इत्यादि श्रुतेः न तु जीवज्ञानस्य मोक्षोपयोगित्व-मतः प्रकरणप्रतिपाद्यो न जीवः अपितु परमात्मैवेति। अपि च "अस्य महतो भूतस्य निःश्वसितमेतत्। आत्मनो वा दर्शनेन श्रवणेन मत्या विज्ञानेन" इत्यादिना प्रतीयमानं सर्वोपादानत्वम्। ब्रह्म तं परादादित्यादिना प्रतीयमानं सार्वात्म्यं च परमात्मभिन्ने न सम्भवति तस्मादपि प्रकरण-प्रतिपाद्यः परमात्मैव। न च पतिजायादिसंबन्धित्वादिप्रतिपादनं जीवलक्षणं तत्कथं परमात्मनि स्यादिति वाच्यं तद्वाक्यानां परमात्मानुगुणतयाप्यर्थवर्णन-संभवात्। न चैवं "विज्ञानघन एवैतेभ्यः समुत्थाय तान्येवानुविनश्यती"-त्यादि जीवप्रतिपादकविज्ञानघनपदेन कथं परमात्मनोऽभिधानं सम्भवति। कथं वा उत्पादविनाशादिजीवधर्माणां परमात्मनि समन्वय इति वाच्यम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाक्षिप्तोपादानोपादेयभावं लब्ध्वा भेदसूचनाय जीवधर्माणां परमात्मनि कीर्तनसंभवात् "आमुक्तेर्भेद एव स्यात् जीवस्य च परस्य च। मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः" इति प्राचीनोक्ति-क्रमेण भाविकालिकाभेदमाश्रित्य परमेश्वरे जीवधर्माणां कथनमपि न विरोधभाव इति। किंच परमेश्वरस्य सर्वान्तर्यामितया जीवेऽप्यवस्थानात् शरीरभूतजीववाचकशब्दैः शरीरिभूतस्य भगवतोऽभिधानसंभवेन शरीरभूत-जीवधर्माणां शरीरिणि परमेश्वरेऽप्युपपत्तिसम्भवात् जीवगतलिंगानां परमेश्वरे नानुपपत्तिरिति कृतमधिकेनेति ॥१४॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये द्वितीयाध्यायस्य
चतुर्थं ब्राह्मणं समाप्तम् ॥४॥

## द्वितीयाध्याये पंचमं ब्राह्मणम्

**इयं पृथिवी सर्व्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चाय-**

(आत्मैवेदं सर्वमित्यादि) इत्यादिना प्रतिज्ञातस्यार्थस्य सिद्ध्यर्थं परमात्मन उत्पत्तिस्थितिलयकारणत्वहेतुं दर्शयित्वा तस्यैवार्थस्य दृढीकरणार्थ-मागमप्रधानेन मधुब्राह्मणेनोपसंहारे दर्शयितुं पंचम ब्राह्मणमारभ्यते—

(इयं पृथिवीत्यादि) इयं गन्धसमवायिकारणभूता सर्वलोकाना-माधारलक्षणा प्रसिद्धा पृथिवी सर्वेषां जड़चेतनानां भूतानां प्राणिनां मधु मधुवत् मधु : सर्वप्राणिनां धारणान्नपानादिजनकतया च मधुत्वम् । एवमस्यै पृथिव्यै अस्याः पृथिव्याः सर्वाणि भूतानि ब्रह्मादिस्थावरान्त-जीववर्गा मधु पृथिवी सर्वेषां धारिका सर्वप्राणाश्च धार्याः तस्मात्पृथिव्याः प्राणिनां च परस्परमधुत्वमित्यर्थः । अथवा मधु कार्यमित्यर्थः पृथिव्याः सर्वे प्राणिवर्गाः कार्यरूपा, यतः पृथिवी सर्वेषामधिकरणं पोषिका च । प्राणिनां शुभाशुभादृष्टद्वारा पृथिव्याः स्थितिवर्द्धनं चातः पृथिवी सर्वेषां कार्यमिव भवति । यथाऽनेकैर्मधुकरैर्निर्मितो मध्वरूपः कार्यं तद्वत् । मधु यथा सर्वेषां प्रियकरं तथा पृथिवीयं सर्वेषां पोषकतयाऽधिकरणतया च प्रियेति । अस्यां सर्वभूतोपजीव्यतया मधुलक्षणायां पृथिव्यां यस्तेजोमयः स्वयंप्रकाशज्ञानमयः, अमृतमयो मरणादिधर्मरहितोऽपहतपाप्मत्वादिगुण-विशिष्ट इत्यर्थः पुरुषः पुरुषविधः पुरुषाकार इत्यर्थः यश्चायमध्यात्मम् । अत्रात्मशब्देन शरीरेन्द्रियमनःप्राणसमुदायस्य ग्रहणम् तस्मिन् विद्यतेऽयं शारीरः शरीरनिष्ठः शरीरान्तर्यामी तेजोमयः स्वप्रकाशज्ञानात्मकोऽमृतमयो मरणधर्मादिरहितोऽपहतपाप्मत्वादिगुणकः पुरुषः पुरुषाकारः प्रकृते देहस्य पृथिवीविकारत्वात् अधिभूतं पृथिवीस्थानेऽध्यात्म शरीरस्य निवेशः कृत इति । अयमेव शरीरपृथिव्योर्मध्ये वर्तमानः स योऽयमात्मा परमात्मा ।

अध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥१॥

इमा आपः सर्वेषां भूतानां मध्वासामपां सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥२॥

आत्मा वारे द्रष्टव्य इत्यत्र मैत्रेयीब्राह्मणे आत्मरूपेण कथितः सोऽयमेव पृथिव्यन्तर्यामी शरीरान्तर्यामी च । इदममृतम् । उपकोसलविद्यायाम् "एतदमृतमेतदभयमेतद्ब्रह्म" इत्यमृतत्वब्रह्मत्वादिना निर्दिश्यमानमपि इदमेव । तथा "सर्वं खल्विदं ब्रह्म" इत्यादिस्थले सर्वोपादानतया निर्दिश्यमानं यत् तदपीदमेव । इदं ब्रह्म इदं सर्वम् यः खलु पृथिव्यन्तर्यामितया शरीरान्तर्यामितया निर्दिष्टं तत् इयमेव मैत्रेय्या पृष्टो यः परमात्मा तत्स्वरूप एवेति ॥१॥

(इमा आप इत्यादि) इमाः परिदृश्यमाना आपो जलानि सर्वेषां प्राणिनां भूतानाम् मधु मधुवदुपकारकम् । तथा आसामपां जलानां सर्वाणि भूतानि प्राणिसमूहा मधु । परस्परमधुकार्योपकारकत्वात् । यश्चासु अप्सु तेजोमयत्वादिगुणविशिष्टः पुरुषो यश्चाध्यात्ममात्मानमधिकृत्य विद्यमानः रैतस्तेजोमयत्वादिगुणकः पुरुषः स अयमेव मैत्रेयीब्राह्मणोक्तः परमात्मैव सर्वान्तर्यामित्वात् । स अमृतलक्षणो ब्रह्मरूपः सर्वात्मकश्च; "यो रेतसि तिष्ठन् यो रेतसोन्तर इतीदमपि ग्रन्थेऽन्तर्यामिब्राह्मणे रेतोमध्यनिविष्टतया निर्दिष्टः स रैतस इत्युच्यते, रेतसो जलकार्यत्वात्" आपो रेतो भूत्वा शिश्नं प्रविशन्निति श्रुत्यन्तरात् । अतो जलस्थानेऽध्यात्मं रेतसो निवेशः कृत इत्यन्यत्सर्वं प्रथममन्त्रवदेव व्याख्येयम् ॥२॥

अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥३॥

अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥४॥

अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चा-

(अयमग्निः सर्वेषां भूतानामित्यादि) मंत्रः पूर्ववदेव व्याख्येयः । अध्यात्मं वाङ्मयत्वविशेषणम् अग्न्यभिमानित्वाद्वाचः "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति श्रुत्यन्तरादिति ॥३॥

(अयं वायुः सर्वेषां भूतानामित्यादि) तथा वायुरपि अत्राध्यात्मं प्राणः "वायुः प्राणो भूत्वा नासिके प्राविशदिति" श्रुतेः भूतानां शरीरप्रयोजकत्वे-नोपकारान्मधुत्वम् तदन्तर्गतानां तेजोमयादीनां करणरूपतयोपकाराधाना-न्मधुत्वम् तथा च श्रुत्यन्तरम् "तस्यै वाचः पृथिवी शरीरम् ज्योतीरूपमय-मग्निरिति ॥४॥

अयमादित्यः सर्वेषां भूतानामित्यादि मंत्रे आदित्यो मधु । अत्राध्यात्मं चाक्षुषः पुरुषः । यद्यप्यादित्यस्य तेजोलक्षणस्य जीवभूतेऽग्नौ समावेशो भवति इति तदुपादानं पार्थक्येन निरर्थकमिवाभाति तथापि देवताभेद-माश्रित्याग्निकथनं कथितन्यायप्रदर्शनम् ।" आदित्यश्चक्षुर्भूत्वा अक्षिणी

यमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व्वम् ॥५॥

इमा दिशः सर्वेषां भूतानां मध्वासां दिशां सर्व्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व्वम् ॥६॥

अयं चन्द्रः सर्व्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिंश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व्वम् ॥७॥

प्राविशदिति" श्रुत्यन्तरम् अतोऽध्यात्ममतश्चाक्षुषः कथितः । अन्यत्सर्वं पूर्ववदेवेति भावः ॥५॥

(इमा दिशः सर्वेषामित्यादि) यथा आदित्यो मधु तथा दिगपि भूतानां मधु । अत्राध्यात्मं श्रौत्रः पुरुषः दिशः श्रोत्रं भूत्वा कर्णौ प्राविशदिति श्रुत्यन्तरेण श्रोत्रमेव दिशामध्यात्मम् । तथा चाध्यात्मं श्रोत्रमित्येव वक्तव्यं प्रतिश्रुत्य इति विशेषणं कथं तथापि श्रोत्रमध्यात्मं शब्दग्रहणसमये विशेषतः संनिहितो भवति अतोऽध्यात्मं प्रतिश्रुत्कः प्रतिश्रुत्कायां प्रतिश्रवणसमये भवः प्रतिश्रुत्क इत्यादि । अन्यत्सर्वं पूर्ववदेवेति ॥६॥

(अयं चन्द्रः सर्वेषामित्यादि) यथा दिक् तथा चन्द्रोऽपि अत्राध्यात्मं मानसः पुरुषः मनसि हृदये विद्यमानो मानसः "चन्द्रमा मनो भूत्वा हृदयं प्राविशदिति श्रुतेरन्यत्सर्वं प्रथमादिमंत्रवदेव बोध्यम् ॥७॥

इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥८॥

अयं स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिंस्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥९॥

अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥१०॥

(इयं विद्युत्सर्वेषामित्यादि) यथा चन्द्रमास्तथा विद्युदपि । अत्राध्यात्मं तैजसस्त्वम् तेजसि भवस्तैजसः पुरुषोऽध्यात्मम् । एतदन्यत्सर्वं प्रथमादिमन्त्रवदेव ज्ञातव्यमिति भावः ॥८॥

(अयं स्तनयित्नुरित्यादि) अत्राध्यात्मं शाब्दः स च वागिन्द्रियेणोच्चार्यमाणशब्दस्यान्तर्यामी । तस्यैव सौवर इति विशेषणम् । स्वरे विशेषतो भवः सौवरः । यद्यपि शरीरमात्रं द्रव्यात्मकं शब्दस्तु न द्रव्यं ततः कथं तस्य शरीरत्वं तथापि शब्दगुणकद्रव्यशरीरवृत्तितया शब्दस्यापि शरीरत्वकथनमदुष्टमेवेति । तदन्यत्सर्वं पूर्ववदेवेति ॥९॥

( अयमाकाश इत्यादि ) अत्राध्यात्मं हृदयाकाशोऽन्यत्सर्वं पूर्ववदेवेति ॥१०॥

अयं धर्म्मः सर्वेषां भूतानां मध्वस्य धर्म्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्म्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥११॥

इदं सत्यं सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥१२॥

इदं मानुषं सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥१३॥

(अयं धर्म इत्यादि) धर्मः श्रुतिस्मृतिपुराणादिप्रसिद्धो यागहोमदानादिलक्षणः यश्चाध्यात्मं धर्मः धर्मफललक्षणसुखदुःखादिरूपः धर्मे भवो धार्म इत्याद्यन्यत्सर्वं पूर्ववदेवेति ॥११॥

(इदं सत्यमित्यादि) अत्र सत्यमिदं सत्यवचनपरकमेव सात्यं तत्फलभूतं सुखादिलक्षणम् सत्ये भवं सात्यमिति व्युत्पत्तेरन्यत्सर्वं पूर्ववदेवेति ॥१२॥

(इदं मानुषं सर्वेषामित्यादि) मानुषं मनुष्यप्रसिद्धम् । तत्राधिदैवतं वह्नीन्द्रादिरूपं सर्वेषां प्राणिनां मधु भवतीत्यर्थः । अध्यात्मं मानुष इत्यत्र मनुष्यशब्दो मुख्यमनुष्यबोधक एवेति । अन्यत्सर्वं पूर्ववदेवेति ॥१३॥

अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥१४॥

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवा-

यथोक्तप्रकारेणाध्यात्माधिदैवतभेदभिन्नेषु सर्वचेतनवर्गेषु भगवतोऽन्तर्यामित्वं प्रतिपादितं ततश्च यो यस्मिन् तिष्ठति स तेभ्योऽभिन्नो भवति यथा गृहेऽवस्थितो देवदत्तो गृहाद्भिन्न इति नियमेनान्तर्यामित्वात्पर-मात्मापि जडवर्गाद्भिन्नो जडान्तर्यामित्वादिति प्रतिपाद्य चेतनानामप्य-यमन्तर्यामी तस्मात् चेतनेभ्योऽपि भिन्नस्तद्विलक्षणश्चेति प्रतिपादयितु-मुपक्रमते—

(अयमात्मा सर्वेषां भूतानामित्यादि) अयमात्मा प्रत्यगात्मा जीवः सर्वेषां भूतानां पृथिव्यादीनां मधुभोक्तृत्वात् इत्यादि मन्त्रे सर्वं पूर्ववदेव । यश्चायमस्मिन् आत्मनि प्रत्यगात्मनि तेजोमयः स्वप्रकाशज्ञानात्मकोऽमृत-मयोऽमरणधर्मा पुरुषः सर्वेषु यश्चायं तेजोमयोऽमृतमयः पुरुषो निर्दिष्टः सोऽस्मिन् प्रत्यगात्मनि अवस्थितोऽन्तर्यामी परमात्मा सोऽन्तर्यामी कस्तत्राह-यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वमिति ॥१४॥

(स वा अयमित्यादि) सोऽयमात्मा यश्चेतनाचेतनविलक्षणतयैतावता ग्रन्थेन निरूपितः परमात्मा स सर्वेषां भूतानां जडचेतनानामधिपतिः शेषी अंगीत्यर्थः, सर्वेऽपि पदार्था यस्यावयवभूतास्तादृशानां सर्वेषामयमवयवी । अयमेव प्रकरणप्रतिपादितः परमात्मा सर्वेषां भूतानां राजा नियन्ता ।

स्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥१५॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः

दीप्त्यर्थको राज् धातुस्तथा चातिशयितदीप्तिमान् दीप्तिमत्वादेव सर्वनियन्ता परमेश्वरः

(तद्यथेत्यादि) तद्यथा येन प्रकारेण रथस्य नाभौ रथस्य नेम्यां च सर्वेऽराः प्रतिष्ठितास्तत्राश्रिताः तत्र रथनाभिर्नाम रथचक्रस्य मध्यवर्ति सरन्ध्रं काष्ठम् नेमिर्नाम वलयाकारं काष्ठम् अनयोर्मध्ये वर्तमाना दारुशलाका अराः। तत्र यथा अरा नाभिनेम्याश्रिता एवमेवानेन प्रकारेण वास्मिन् आत्मनि सर्वस्यांगिभूते परमात्मनि सर्वाणि भूतानि पृथिव्यादीनि सर्वेदेवाश्चेतना इन्द्रादयः सर्वे लोका भूरादिकाः सर्वे प्राणा इन्द्रियवर्गादयः एते आत्मानो जीवाः समर्पिताः परमात्मनि आश्रिताः सर्वेषां आश्रयभूताः परमात्मान एव। एतावता सर्वोऽपि जडचेतनप्रपंचः सामान्यविशेषरूपेण भगवदाश्रित एवेति भावः ॥१५॥

ईदृशमधुविद्यायाः स्तुत्यर्थमियमाख्यायिका प्रारभ्यते। अत्रेयमाख्यायिका। आसीत् किल पुरा दध्यङ्ङाथर्वणनामको ऋषिः स खलु देवराजेन्द्रसकाशादिमां मधुविद्यां प्राप्तवान्। ततः पूर्वमिन्द्रव्यतिरिक्तो मधुविद्यामजानान एवासीत्। तस्मै मधुविद्यामुपदिश्य इन्द्रः प्रोवाच नान्यस्मै इयं विद्योपदेष्टव्या अन्यथा तव शिरश्छेत्स्यामीति प्रोक्तवान्। ततः परमिन्द्रभयात् न कस्मैचित्प्रोवाच। अथ कदाचित् लोभाभिभूतो ब्राह्मणोऽश्विनोः समीपमागत्य प्रोवाच। इन्द्रभयादहमिमां विद्यां न कथयामि यदि भवन्ताविन्द्रभयान्मां रक्षेतां तदाऽहं भवद्भ्यामिमां मधुविद्यामवक्ष्यम्। तदनन्तरमश्विभ्यां विद्योपदेशकाले आवां त्वदीयं शिरश्छित्वाऽन्यत्र संस्थाप्यान्यस्य मस्तकेन त्वां समलंकरिष्यावस्तेन शिरसा आवाभ्या-

**पश्यन्नवोचत्तद्वान्नरासनयेदंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिं दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्रयदीमुवाचेति ।।१६।।**

मुपदिश ततो यदोपदेशं ददद् आसीत् तदैव क्रोधज्वालाज्वलितो देवराजः समागत्य तन्मस्तकं चिच्छेद ततस्तावश्विनावन्यत्र स्थापितं तदीयं शिरस्तदीयग्रीवायां योजयामासतुः । ततः सशिरो ऋषिस्ताभ्यां मधुविद्योपदेशं दत्तवान् । एवं महता क्लेशेन मधुविद्याया ज्ञानं तयोरभूत् । इत्थं हि महाभागा विद्या यदाश्रयात् मर्त्योऽपि भगवद्भावं प्राप्नोतीति तामाख्यायिकामाह–

(इदं वै तन्मधु इत्यादि) अत्र खलु वै शब्दः आख्यायिकाया वृत्तान्तस्मारणे । दध्यङ् तत्र दधि अंचतीति दध्यङ् । अथर्वणः पुत्र आथर्वणः सदध्यङ् आथर्वणो ऋषिः अश्विभ्यामश्विनीकुमाराभ्यामिदं तन्मधु मधुब्राह्मणं मधुविद्यामित्यर्थः उवाच प्रोक्तवान् किल । तदेतत् अश्विनीकुमारयोर्वृत्तान्तम् ऋषिः कोऽपि पश्यन् भगवत्कृपया जानन् अवोचत् अश्विनौ प्रति समुवाच ।

(तद्वामित्यादि) हे नरा मनुष्याः हे नरौ दिव्यपुरुषावश्विनीकुमारौ वाम् युवयोः सनये लाभाय सनिरिति शब्दो लाभपर्यायः, तथा च विद्यालाभाय मधुविद्याप्राप्तये उग्रमतिशयेन क्रूरं शिरच्छेदनादिलक्षणम् दंसः कर्म विद्यते तत् कुत्सित कर्म तन्यतुः । विलाहकः । न वृष्टिमत्र न शब्दो न निषेधार्थकोऽपितु इवार्थकः वृष्टिमिव । आविष्करोमि प्रकाशयामि । यथा खलु मेघः स्वस्थितजलधारात्मिकां वृष्टिं प्रकाशयति तद्वत् अहं तव क्रूरं कर्म प्रकाशयामीत्यर्थः किं तत् आविष्क्रियते । तत्राह–

(दध्यङ् ङाथर्वणो हेत्यादि) अत्र ह इत्यनर्थको निपातः प्रयदीमित्यत्रापि ईमित्यनर्थक एव । हे अश्विनौ ! वायुं वयोः दध्यङ ङाथर्वणः अश्वस्य शीर्ष्णा मस्तकेन । स्वशिरोव्यत्तिरिक्ताश्वशिरसा प्रोवाच यत् तदहमाविष्करोमि प्रकाशयामीति । एवं चातिमहता प्रयत्नेनाश्विनीकुमाराभ्यां दधीचेः सकाशात् मधुविद्या गृहीतेति सेयं विद्या स्तूयते इति ।।१६।।

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचदाथर्वणायाश्विनौ दधीचेऽश्व्यं शिरः प्रत्यैरयतं स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ।।१७।।

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा

इदं वै तन्मधु इत्यादि दध्यद्ङाथर्वणोऽश्विभ्यां यदुवाच तत् मधु ब्राह्मणम् । एतद्वृत्तान्त कश्चिदृषिः योगजधर्मसहकृतेन मनसा पश्यन् अवोचत् प्रोक्तवानिति मन्त्रान्तरं दर्शयितुमाह -

(आथर्वणायेत्यादि) अश्विनौ हे अश्विनीकुमारौ दधीचे आथर्वणाय दध्यङ्नामकायाथर्वपुत्राय अश्वीयमश्वसम्बन्धिशिरो मस्तकं प्रत्यैरयतम् प्रतिसंहृतवन्तौ । दध्यङ्नामको ऋषिः वाम् युवयो ऋत न् सत्यं कुर्वन् त्वाष्ट्रं मधु त्वष्टा यज्ञशिरः तत्सम्बन्धि त्वाष्ट्रं तादृशं शिरो मस्तकं समाधायकत्वसाम्यान्मधु प्रवर्ग्यमित्यर्थः । प्रवर्ग्यस्य त्वाष्ट्रशब्दितशिरः प्रतिसन्धानार्थत्वात्, तत्रोवाच प्रोक्तवान् । हे दस्रौ हे अश्विनिकुमारौ कक्ष्यं गोप्यमपि यद् ब्रह्मसम्बन्धि मधुब्राह्मणं वां युवयोः प्रोवाचेति ।।१७।।

इदं वै तन्मधु दध्यङ्ङाथर्णणोऽश्विभ्यामुवाचेत्यादिमंत्रः पूर्ववदेव व्याख्येयः । तत्र मन्त्रान्तरं प्रदर्शनार्थमयमारंभः—

(पुरश्चक्रे इत्यादि) स परमात्मा द्विपदः पुरश्चक्रे कृतवान् द्वौ पादौ विद्येते यस्य स द्विपात् पुरो द्वितीयाबहुवचनम् पुराणि । तथा द्विपात् द्विपादोपलक्षितानि पुराणि शरीराणि संपादितवान् । ततश्चतुष्पदश्चतुष्पादोपलक्षितानि पुराणि शरीराणि चक्रे कृतवान्, मनुष्यशरीरनिर्माणान्तरं पशुशरीराण्यकरोत् । देवमनुष्यपश्वादिशरीरात्मकं नगरं निर्माय ततः पुरः

**पुरः पुरुष आविशदिति स वा अयं पुरुषः सर्व्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नानेन किञ्चनासंवृतम् ॥१८॥**

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचद्रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय**

पुरस्तात् स परामात्मा पक्षी पक्षीरूपो भूत्वा संसारकारणीभूतकर्मणाऽस्पृतः सन् पुरुष आविशत् प्रविष्टः । यद्यपि परमात्मनः साक्षात्कर्मणा संबन्धो नास्ति तथापि सृष्टानि सर्वाणि पुराणि शरीराणि जीवशरीरकः परमात्मा प्राविशत् तेषु प्रवेशं कृतवानित्यर्थः । श्रुतेरालस्याभावात् श्रोतृहिताय स्वयमेव मन्त्रार्थमाविष्करोति—

(स वा अयमित्यादि) सर्वासु पूर्षु देवमनुष्यादिसर्वशरीरेषु वर्तमानोऽयं परमात्मा पुरिशयः पुरिसंज्ञके अस्मिन् शरीरे शयनात् स्थितिकरणात् पुरुषः स परमात्मा । पुरि शरीरे शेते इति पुरुषः व्यत्ययात् तालव्यशकारस्य मूर्धन्यादेशः तस्मादयं पुरुष इति—

(नानेनेत्यादि) नानेन अनेन सर्वव्यापकेन परमात्मना न किंचिदपि अनावृतम् अनाच्छादितम् । नानेन वा किंचिदप्यसंवृतम् अननुप्रवेशितम् । तत्रानावृतं बहिरनावृतम् असंवृतमन्तरसंवृतम् परमात्मना अन्तर्बहिर्वा अव्याप्तं किमपि नास्ति अर्थात् यदस्ति तत् सर्वं शरीरं परमात्मना व्याप्तमेव अन्तर्बहिरवस्थानात् "तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यत" इतिश्रुतेः तदेव च व्यापकस्य व्यापकत्वं यदन्तर्बहिरवस्थानमिति ॥१८॥

इदं वै तन्मधु इत्यादि व्याख्यानमेतस्य पूर्ववदेव । पुनः कथनमस्य मन्त्रान्तरप्रदर्शनार्थकमेवेति ।

(रूपं रूपमित्यादि) रूप्यते ज्ञायते इति रूपं दृश्यं वस्तु घटपटादिविज्ञान-विषयत्वादस्य वीप्सायां द्विर्भावः तथा च रूपं रूपं प्रतिवस्तु इत्यर्थः प्रतिरूपः

**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च शतानिसहस्त्राणि बहूनि चानन्तानि च तवेतदब्रह्मा-**

सदृगरूपः तत्तद्रूपसदृशतयाऽन्तर्यामि स्वरूपेणावस्थिता बभूवेत्यर्थः अथवा प्रतिरूपो बभूव । तत्र प्रतिरूपं प्रतिष्ठितं रूपं यस्य स प्रतिरूपः सर्वस्याप्यन्तर्यामीति भावः ।

(तदस्येत्यादि) तत् अस्य परमात्मनो रूपं प्रतिचक्षणाय तत्र प्रतिचक्षणं व्यवहारः तथा च यद्व्यवहर्तव्यं तत्सर्वमपि अस्य भगवतो रूपं शरीरमित्यर्थः । अथवा तदित्यत्र पंचमी तत् तस्मादित्यर्थस्ततश्च यस्मादयं परमात्मा प्रतिरूपः सदृशरूपो बभूव, तस्मादेव कारणात् सर्वं जडचेतनं तस्य भगवतः शरीरं भगवांश्च सर्वस्य शरीरीति । अथात्मनः शरीरसंबन्धः कर्मप्रयोज्यः परमात्मनः कर्माभावेन कर्मारब्धस्य व्यवह्रियमाण जडचेतनप्रपंचस्य कथं भगवद्रूपत्वं विरोधादिति ये मन्यन्ते तानपवदितुं श्रुतिराह—

(इन्द्रो मायाभिरित्यादि) इन्द्रो भगवान् परमैश्वर्यार्थको धातुरिदिः ततश्च सर्वैश्वर्यवान् परमात्मा मायाभिः सकल्परूपज्ञानैः विचित्राश्चर्य कार्यकारित्वात् ज्ञानात्मकत्वाच्च मायापदबोध्यत्वं संकल्पस्य समुपपद्यते, न तु सदसद्भ्यामनिर्वचनीया । ईदृश्यास्तस्याः कार्यकारित्वासंभवात् । मायावयुनं ज्ञानमिति निघण्टुकारमतेन ज्ञानरूपैव सेति । इत्थंभूतः परमात्मा ज्ञानात्मकमायाद्वारा पुरुरूपोऽनेकशरीरः ईयते भवति । स्वेच्छामात्रगृहीतानेकशरीरो भवति । स परमात्मा स्वेच्छागृहीतनानाशरीरको भवतीति भावः । ननु रूपं रूपं प्रतिरूपो बभूवेति कथनं कथमुपपद्यते ? आचोत्तमब्रह्मादिशरीरादारभ्य कीटपतंगादिपर्यन्तानन्तरूपेष्वेकस्य परमात्मनस्तदन्तर्वर्तितयाऽवस्थानस्यासंभवादित्याशंक्याह—

(युक्ता ह्यस्येत्यादि) शता शतानि अस्यानन्तप्रपंचस्य युक्ता योग्याः तत्तत्संख्याविशिष्टस्य शतानि दशहरयः शतानि दशानन्ता इत्यर्थः

**पूर्व्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥१९॥**

**इति बृहदारण्यकोपनिषदि पञ्चमं ब्राह्मणम् समाप्तम् ॥५॥**

अनन्ता हरयः अन्तर्यामिशरीरस्यानन्त्यात्, अनन्ता हरय इति कथनं युक्तमेवेति—

(अयं वै इत्यादि) अयमेक एव हरिः शतानि सहस्राणि बहूनि हरयो भवन्ति परमात्मनो विचित्रशक्तियुक्तत्वेन सर्वमुपपन्नं भवतीति। एतावता प्रकरणेन यद् ब्रह्मनिर्दिष्टं तदुपसंहरन्नाह—

(तदेतदित्यादि) तदेतत् ब्रह्म। एतावता प्रबन्धेन यत् प्रतिपादितं तद् ब्रह्म परमात्मेति। ब्रह्मशब्देन त्रिप्रकारकपरिच्छेदराहित्यमर्थो गम्यते। तत्प्रतिपादयितुमाह—

(अपूर्वमित्यादि) पूर्वं कारणं न पूर्वमित्यपूर्वम् कारणवान् हि पदार्थः पूर्वापरकालाभ्यामवच्छिन्नो भवति अयं तु कारणरहितत्वात् पूर्वोत्तरकालशून्यं कालानवच्छिन्नमित्यर्थः; एतावता कालपरिच्छेदाभावो दर्शितः, अनन्तरमबाह्यं देशपरिच्छेदरहितम् बाह्याभ्यन्तरव्यवहारायोग्यमित्यर्थः। सर्वोत्कृष्टत्वं लक्षणवस्तु परिच्छेदाभावं परमात्मनि दर्शयति अयमात्मा ब्रह्म। सर्वस्य परमात्मा नियन्ता तस्मात्सर्वत उत्कृष्टः अथवा सर्वात्मत्वादेव। एषमिदं नेति निर्देशानर्हत्वं लक्षणवस्तुपरिच्छेदोऽत्र विवक्षितः एतादृशवस्तुपरिच्छेदरहितमित्यर्थः। सर्वानुभूः स परमात्मा सर्वज्ञः उपलक्षणमेतत् सर्वजगत्कारणत्वसर्वनियन्तृत्वसर्वशक्तित्वादिगुणानाम्। ततश्च सर्वज्ञः सर्वनियन्ता सर्वजगत्कारणम् सर्वशक्तित्वादिगुणकश्च परमात्मेति। इति एतावदेवानुशासनं सर्वविदान्तानामुपदेशः परमात्मविषये भवतीति ॥१९॥

इति बृहदारण्यकोपनिषादि आनन्दभाष्ये द्वितीयाध्यायस्य पंचमं ब्राह्मणम् समाप्तम् ॥५॥

## द्वितीयाध्याये षष्ठं ब्राह्मणम्

**अथ वंशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥१॥**

यस्या विद्यायाः संप्रदायो गुरुपरपरा न ज्ञायते सा विद्याऽभ्युदयफलिका न भवति, अभ्युदयफलकत्वाभावे च लोकेऽनादरणीयता स्यात् तथा आचार्यवंशो ज्ञातव्य इति श्रवणाच्च विद्योपदेशकाचार्यपरम्पराऽवश्यमेव प्रदर्शनीयेति मत्वा आचार्यपरम्परां दर्शयितुमुपक्रमते—

(अथ वंश इत्यादि) अथानन्तरं विद्योपदेशानन्तरं विद्योपदेशकाचार्यवंशपरम्परा प्रदर्श्यते अत्र वंशानुक्रमणे सर्वत्र प्रथमान्तपदेन शिष्यस्य कीर्तनं पंचम्यन्तपदेन चोपदेशकस्याचार्यस्यानुकीर्तनं ज्ञातव्यमिति । तत्र वंश इव वंशः यथा एकस्माद्वेणुपर्वणः पर्वक्रमेण मूलपर्यन्तज्ञानं जायते तद्वदिहापि मूलपर्यन्तंवंशो ज्ञायते । तत्र सर्वप्रथमः पौतिमाष्यः सर्वावसाने ब्रह्म । ततः परमाचार्यपरम्परा नास्ति इति ।

(पौतिमाष्य इत्यादि) तत्र पौतिमाष्य आचार्यो मधुविद्याप्रवर्तको गौपवनात् तन्नामकादाचार्यविशेषात्प्राप्तमधुविद्योऽभूत् । एवं गौपवन आचार्यः कौशिकात् तन्नामकादाचार्यविशेषाल्लब्धमधुविद्योऽभूत् एवं कौशिकः कौण्डिन्यादित्यादिक्रमेण ज्ञेयः ॥१॥

एवमाग्निवेश्यादग्निवेश इत्यादि पूर्ववदेवेति स्वयंभु इति स्वयमेव भवतीति स्वयंभु उपदेश विनैव विद्याप्रवर्तकं भवतीति । ब्रह्मणे नमः सर्वगुरवे ब्रह्मणे नमो नमस्कारो भवतु:

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये द्वितीयाध्यायस्य षष्ठं ब्राह्मणं समाप्तम् ॥६॥

श्रीमज्जगद्गुरुरामानन्दाचार्यकृतानन्द भाष्यभूषितायाः बृहदारण्यकोपनिषद् द्वितीयोऽध्यायः समाप्तः ।

आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लात आनभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्यां सैतवप्राचीनयोग्यौ पाराशर्य्यात्पाराशर्य्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्य्यात् पाराशर्य्यो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिः ।।२।।

घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात् पाराशर्य्यायणः पाराशर्य्यात् पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद् भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद् बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वादैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्राध्वंसनात्प्राध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभुब्रह्मणे नमः ।।३।।

इति बृहदारण्यकोपनिषदि षष्ठं ब्राह्मणम् समाप्तम् ।।६।।

इति द्वितीयोऽध्याय समाप्तम् ।।२।।